Reg. No. C 1073

Vol. XXV, No. 1 | [ May, 1942.

१८६४ शकीये वैशाखे | १९४२ खृष्टाब्दस्य मे-मासः

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

পরিষদ্ভবনের নির্মাণকার্য্য আরম্ভ হইয়াছে। আপনার যথাসাধ্য সাহায্য অনুগ্রহপূর্ব্বক প্রেরণ করিলে ধন্যবাদের সহিত গৃহীত হইবে।

परिषद्भवननिर्माणं समारब्धम्। श्रीमता यथायोग्यमर्थानुकूल्यं सविनयं सम्प्रार्थ्यते।



भारते मातृ भारती

The construction work of the Parishat Building is already in progress. Your generous contribution to the Building Fund, however small, will be thankfully acknowledged.

सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्— रूप्यकचतुष्टयम् ( ४ )
Foreign price

*Printed and Published by*
**Dinabandhu Sahityashastri**
Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta

पवनदूतम्

**PAVANADUTAM of DHOYI**

Editd by

Prof CHINTAHARAN CHAKRAVARTTY, M. A
*Professor, Krishnagar College,*

Price As 12, for members As 10

**(From letters to the editor)**

**Prof. Hermann Jacobi :**—... ..Your careful edition of Dhoyi's Pavanadutam. Your introduction furnishes the reader with the necessary information about the author, his time, the poem, its style and contents .. .

**Prof Dr M. Winternitz, Prague:**— .....Your valuable edition of Dhoyi's Pavanadutam As you have had at least one good MS more than the first editor had, your edition is all the more welcome The introduction is very useful.

**Dr. E. Hultzsch:**— .. It is the first critical edition of this well-known imitation of the Meghaduta and I shall peruse it with much interest. Your introduction and your commentary form a welcome addition to the handsomely got up volume .. ..

**Prof. Sten Konow:**— It has given me great pleasure to go through it and it is very much superior to the old edition .

**Prof. E. J. Rapson:**— ... It is evidently a work of great interest..... .

**L. D. Barnett of the British Museum, London:** — . ... A most interesting poem and you have dealt with it in a very skilful manner

**Prof. G. Tucci of the University of Rome:**— ... Your careful edition of the Pavanadutam, which I have read with the greatest interest, appreciating your scholarship and accepting your conclusions. .

**J. Van Manen, General Secretary, Asiatic Society of Bengal:**—. I offer you my compliments with the interesting results obtained by you .

**Forward** (6 6 26):— . The learned and critical way in which it has been edited reflects much credit on the editor...

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| May, 1942 | १८६४-शकीये वैशाखे<br>२५श-वर्षस्य १म-संख्या | Vol. XXV<br>No. 1 |


सुन्दरदेव संकलितः

## सूक्तिसुन्दरः

( पूर्वानुवृत्तिः )

[डाः श्रीयतीन्द्रविमलचतुर्धुरीण-सम्पादितः]

मूर्ध्नि कल्याणवाही करजितवराभः सर्वदा पूर्णकामो
विख्यातः कर्णपूरस्या वर्त्तारा न च कटुश्चित्रपाकानुभावी ।
कोपापेक्षी परस्मात्कुञ्चितबहुकशः सर्वदा पूर्णलोक
इत्थं राजेन्द्रसिंह त्वमिव तव रिपुस्तत्र कंपं प्रतीमः ॥४६॥

यस्योच्छिन्ना न बद्धा मनसि सदयता दूषणानामभावो
दक्षा दूरेण दृष्टा जहति कठिनता दानशक्तिर्गरिष्ठा ।
आधत्ते यस्य कुन्दं शिरसि दरवतां यस्य दूरीकृतानि-
रित्थं राजेन्द्रसिंह त्वमिव तव रिपुस्तत्र दम्भं प्रतीमः ॥४७॥

कस्याप्येतौ ॥

प्रध्रश्यच्चतिकुसुमस्तकः प्रविगलत्सद्वर्णविप्रस्थिति-
र्नश्यद्धस्ताङ्कबलः प्रनष्टवचनप्रागल्भ्यपूर्णस्मृतिः ।

क्रुद्धोऽत्यन्तमयं स्वयं कलिमहाम्लेच्छेन निर्मूलितो
धर्मः सम्प्रति पाल्यते तव कराालम्बेन भूमीपते ॥४८॥

गौर्याः ॥

सद्भूतिभूषिततनुं हृतकामगर्वं प्रज्ञातृतीयनयनं गलराजिदीपम् ।
आर्याभिवन्दितपदं द्विजराजभालं त्वां कामदं नृप न के कलयन्ति
शम्भुम् ॥४९॥

भोगासक्तैकचेता भयवशसुखकृद् भीतिहा स्वाश्रितानां
भोगान् भव्याय यच्छन् जगति भवनतः साधु भण्डारतिश्च ।
भूपानां ग्लानिकर्ता भटनगजयभव्यं ..देहेहिभङ्गा-
कीर्णं श्रीमाणिकेन्द्रस्त्वमिव तव रिपुस्तत्र कम्पं प्रतीमः ॥५०॥

सुन्दरस्यैतौ ॥

इति सूक्तिसुन्दरे राजस्तुतितरङ्गः ॥

॥ अथ कीर्तिवर्णनम् ॥

वापी पातालमूलं जलमुरगनदी कच्छपः स्वच्छकन्दः
शेषो नालं दलानां विततिरपि फणा कर्णिका शैवशैलः ।
तारास्तारा[ः] परागा मधु च मधुमती केशरा दन्तिदन्ता-
स्तस्मिन् यत्कीर्तिपद्मे भ्रमति मधुकरः शर्वरीसार्वभौमः ॥५१॥

कृष्णपण्डितस्य ॥

त्वत्कीर्त्या धवलीकृते त्रिभुवने दामोदराङ्कस्थिता
सत्या तं हि विमृश्य लाञ्छनभृतं (?) व्रीडाविनम्रानना ।
किञ्चान्यत् कथयामि कौतुकमितः स्वीयाङ्गनैः सर्वतो
गुञ्जापुञ्जमुदीक्ष्य मौक्तिकधिया नृत्यन्ति दीनाङ्गनाः ॥५२॥

बालाजीभट्टस्य ॥

स्वर्गे कल्पद्रुमाधस्तव जयति यशःपुञ्जयोगेश्वरोऽयं
यं नित्यं देवराजः स्नपयति नियतः कामधुग्दुग्धपूरैः ।

यन्मौलौ बिल्वपत्रद्युतिमदमलं(?) व्योम धत्तेऽतिनीलं
चन्द्रः पाटीरपङ्कं तदुपरि ललितास्तारकास्तण्डुलानि ॥५३॥

यत्कीर्तिः कापि गङ्गाऽखिलमलनिचयं नाशयन्ती गभीरं
क्षीराब्धिं यत्प्रतापोज्ज्वलनकरगणैः शोषितं पूरयन्ती ।
भूलोकस्यान्तरालस्फुरदतुलमहादुःखपापौघपङ्कं
भूयः प्रक्षालयन्ती त्रिजगति महिता सौख्यमाविष्करोति ॥५४॥

एतौ जगज्जीवनस्य ॥

प्रतिनगरमटन्ती प्रत्यगारं व्रजन्ती
प्रतिनरपतिवक्षःकण्ठपीठे लुठन्ती ।
गिरिगरिमनितम्बाच्छादने सावधाना
तदपि च तव कीर्तिर्निर्मलैवेति चित्रम् ॥५५॥

कस्यापि ॥

क्षीरोदीयन्ति सद्यः सकलजलधयो वासुकीयन्ति नागाः
कैलासीयन्ति शैला दिवि च दिविषदः शङ्करीयन्ति सर्वे ।
यौष्माकीणे समन्तात् प्रसरति नितरां दिक्षु कीर्तेर्विताने
मन्मोषाकाचभूषाः किमिति न सहसा मौक्तिकीयन्ति रूपम् ॥५६॥

यस्य क्षौणिपतेर्विहायसि यशोराशौ चमत्कुर्वति
द्राक् कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते ।
चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयो-
बुद्ध्या व्योम्नि नियोजयन्ति कलशीराभीरवामभ्रुवः ॥५७॥

कस्यापि ॥

पाद्यं दुग्धाम्बुधिरपि सुधानर्घमर्घं तथैता-
स्तारा हारास्तमनुमलयजं(?) चन्दनं चन्द्रकैव ।
इन्दोर्बिम्बं रुचिरमुकुरः स्वर्गतेति श्रुताग्रा-
स्त्वत्कीर्त्तेरुपहृतमिदं स्वर्यथेच्छं वधूभिः ॥५८॥

दुग्धाम्भोधावगाधे विहरति सुधया क्षालयत्यङ्गयुग्मं
कृत्स्ना ज्योत्स्ना दुकूलं कलयति मलयोद्भूतमङ्गीकरोति ।
स्वच्छन्दं नृत्यति द्रागुरगपतिशिरस्येव[निद्रा]ति चन्द्र
त्वत्कीर्तिः स्वामिनीव त्रिजगति विहरत्येवमुर्वी[श गुर्वी] ॥५९॥

देव त्वद्यशसा सितांशुमहसो गीर्वाणवृन्देऽखिले
शम्भोर्भावमवापिते च सहसा चेत्कौतुकं तच्छृणु ।
साकूता सकुतूहलाः सचकिता सोत्कण्ठिताः साद्भुताः
साशङ्काश्च मुहुर्मुहुर्मधुरिपौ लक्ष्म्या दृशः पातिताः ॥६०॥

लक्ष्मणस्येत ॥

धीर क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीजुष-
स्त्वत्कीर्तेः कलनां कलङ्कमलिनो धत्ता कथं चन्द्रमाः ।
स्यादेवं त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुर-
ग्रासासक्तमतिः पतेद् यदि पुनस्तस्याङ्कशायी मृगः ॥६१॥

भ्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी गता
व्योम ब्रह्ममरालसंगतवशाद् या तत्र गुर्विण्यभूत् ।
पश्य स्वर्गतरङ्गिणीपरिसरे कुन्दावदातं तया
मुक्तं भाति नवीनमण्डममलं शीतद्युतेर्मण्डलम् ॥६२॥

एतौ हनूमतः ॥

तुङ्गब्रह्माण्डसिंहासनमिदमुदयच्चित्रमध्यास्य नित्यं
न्यञ्चद्दिव्यस्रवन्तीसितचमरचयं लालयन् दिग्वधूभिः ।
राकाचन्द्रातपत्रं दिनकरमुकुरं भाहयन्नौ कपालान्
निर्जित्यैन्द्रं करीन्द्रं तव जयति यशश्चक्रवर्ती चचेल ॥६३॥

अकबरीकालिदासस्य ॥

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या पतन्ती च दृष्टा ।

तत्सत्त्वोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु किञ्चाम्भि दत्ता
भृत्येभ्यः श्रीनियोगाद् गदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥६४॥
दाक्षिणात्यस्य ॥

॥ इयं शौर्यप्रधाना कीर्तिः ॥

आकाश प्रसर प्रसर्पत दिशस्त्वं पृथ्वि पृथ्वी भव
प्रत्यक्षीकृतमाद्विराजयशसो युष्माभिरुज्जृम्भताम् ।
श्रीमुद्दाफरसाहपार्थिवयशोराशेः समुज्जृम्भणाद्
वीजोच्छ्वासविदीर्णदाडिमदशां ब्रह्माण्डमारोक्ष्यति ॥६५॥
कस्यापि ॥

कालिन्दीनर्मदाम्भःस्नुतमदसलिलोत्सङ्गिनौ पुष्पवन्तौ
बिभ्राणं कुम्भयुग्मं गगनतलगतः स्वर्धुनीपूरशुण्डः ।
घण्टालः साधुवादैरनभिमतयशोमृन्मलं सन्दधानः
कीर्तिस्तोमाभ्रकुम्भी जगदुदरसरःसम्भ्रमो बंभ्रमीति ॥६६॥
घनश्यामस्य ॥

उल्लालाङ्कुरश्रीर्दिशि दिशि दशनैरेभिराशागजाना
रोहात्तालांशुगौरैस्तुरगपतिगणैरत्र पातालकुक्षौ ।
अस्मिन्नाकाशदेशे विकसितकुसुमावेशिभिस्तारकाणा
नाथ त्वत्कीर्तिवल्ली फलति फलमिदं बिम्बमिन्दोः सुधार्द्रौ ॥६७॥

शैलूषी तव कीर्तिरद्भुतकरी दृष्ट्वा समस्ता दिशो
मेरुं वंशवरं परीत्य परितस्तूर्णं समारुह्यताम् ।
भ्राम्यन्तो परितः प्रनर्तिततनुर्मुक्तावलीमौक्तिकै-
स्ताराभिस्तरलीकरोति गगनं भूमण्डलाखण्डल ॥६८॥

त्वत्कीर्तिर्धनिकाननं मधुरिमा तस्याधमर्णा सुधा
शीतांशुः प्रतिभूस्तदर्थनकृते सैषा दिवं धावति ।

सा लीना तत्र वाचि राम नृपते चन्द्रो निरस्ताम्बराः
शङ्कातङ्कभृदंशुकाश्रुतलनुर्नक्तं समुत्सर्पति ॥६९॥

मे.पामन्येत ॥

कैलासीयति केतकीयति हसत्कुन्दीयति प्रोन्छलत्-
क्षीरोदीयति चन्दनीयति लसत्कर्पूरपूरीयति ।
पीयूषीयति शर्करीयति शरच्चन्द्रीयति क्ष्मापते
स्वर्गङ्गीयति शङ्करीयति भवत्कीर्तिः करीन्द्रीयति ॥७०॥
कर्पूरंतकि केतकंतकि शरद्राकाशशाङ्कन्तकि
श्रीचन्द्रन्तकि चन्दनन्तकि सुधासाराच्छपूरन्तकि ।
कैलासन्तकि दुग्धसागरलसत्स्वच्छाच्छदुग्धन्तकि
श्रीशम्भुन्तकि(?) कीर्तयस्तव विभो दर्वीकरेन्द्रन्तकि ॥७१॥

भव्याभट्टरयैतो ॥

विश्वासो भवता यशस्यपि निजे कार्यो न शौर्याधिके
मा कोषादिवशान्नपुंसकमिति ज्ञात्वाऽवहेला कृथाः ।
यज्जंघालधुरन्धरेण धरणीनाथ द्विधा कुर्वता
ब्रह्माण्डं विदधेऽमुना भवदरिक्षोणीभुजां निर्गमः ॥७२॥

करयापि ॥

निजश्वासोद्भूताहतवरभटास्राज्यकचिमत्
प्रतापाग्नौ दग्धारिसुनगरधूलिर्न न यशः ।
रणे त्वत्कौक्षेयोद्दलितगजकुम्भोद्गलमहान (?)
स्फुरन्मुक्ताना ते विलसति वितानं भुवि विभो ॥७३॥
त्वत्कीर्तिसत्त्वममलं सकलास्ववस्थास्त्वामुच्य भूपतिमणे ललनामवशाम् ।
स्वश्रेयसे स्थिरमना रिपुवीरसङ्घो ह्यद्वैतवाद्यधिविना(?) वयतीव
नित्यम् ॥७४॥
सद्दानाब्धिरिपुव्रजाम्बुजमुखीन्नेब्धि युद्धाब्धि(?)
सद्गौणाब्धिचतुष्कचारुवलया विश्वम्भरासौ कृता ।

शेषे सप्तसु सिन्धुषु प्रतिगतेष्वीश प्रतापेन ते
मात्येतेषु यशःसु शुक्तिपुटजश्चन्द्रोडुमुक्ताव्रजः ॥७५॥

स्निग्धां सम्बध्य वेणीं त्वदरिनवयशःकुन्तलानां ललन्ती
कृत्वा भालोष्ठराजत्पदकरकमले त्वत्प्रतापीयरागम् ।
शुद्धां जित्वाक्ष्यकीर्त्यंजनत इह विभो कीर्तिकान्ताङ्गं ते
मुक्ताहाराम्बराढ्याऽभिसरति गणिकेवाऽऽशु यं कञ्चिदेव ॥७६॥

रिङ्गत्तुङ्गतरङ्ग-सुन्दर-सुधासिन्धुं तरत्युज्ज्वला
रागाच्छर्वपुरःसरानभिसभं देवान् मुदालिङ्गति ।
क्रूराहीश्वरमाश्लिषत्यधिगृहं याति ध्रुवं भूपते
साध्वी-शब्दरता तथापि कुतुकं कीर्तिः प्रमत्ता क्षितौ ॥७७॥

यशःशशाङ्काभ्युदये प्रवृद्धो द्विषद्वधूनेत्रजलाम्बुराशिः ।
नष्टं हि दारिद्र्यतमो बुधानां तव क्षितौ माणिकभूमिपाल ॥७८॥

कैलासाद्रिविषारभूधरकुचा(?) हाराम्बरालङ्कृता
सत्कुन्दायदति-प्रलम्बिबलभिद्दन्तीन्द्रसद्दोर्युतः ।
चन्द्रास्या सुरनिम्नगासहचरी नागाधिपोरूत्तमा
ब्रह्माण्डाङ्गनकेऽभिखेलतितरां कीर्त्यङ्गना ते प्रभो ॥७९॥

एते सुन्दरदेवस्य ॥

विस्फार्य व्योमगङ्गावलदुरुलहरीकैतवात् केशराली-
रुच्चैर्मस्तिष्कदेशे हिमकरकपटान्मण्डलीकृत्य पुच्छम् ।
दिङ्नागारब्धमम्पत्तव विशदयशःकेशरी कार्त्तिकेन्द्र
ब्रह्माण्डारण्यवीथीगिरिगहनदरीसम्भ्रमी बंभ्रमीति ॥८०॥

अकब्बरीकालिदासस्य ॥

कस्तूरी सितिमानमागतवती शौक्ल्यं गताः कुन्तला
नीलं चोत्पलमभूत् सितं धवलिमा जाता मणीनां गणे ।
ध्वान्तं शान्तमभूत् समं नरपते त्वत्कीर्तिचन्द्रोदये
त्रैलोक्येऽप्यभिसारसाहसरसः शान्तः कुरङ्गीदृशाम् ॥८१॥

शङ्करमिश्रस्य ॥

यद्बीजानि च मौक्तिकानि करिणां दन्ता यदीयाङ्कुरा
यत्पत्राणि शरद्घना हिमगिरिर्यस्याः प्रकाण्डो महान् ।
यत्पुष्पाणि च तारका हिमरुचिर्यस्याः फलं सुन्दरं
सेयं राजति रामकीर्तिलतिका ब्रह्माण्डभाण्डोदरे ॥८२॥

नो म्लानिं भजते दिने न च सुराधीशैः समापीयते
नो राहुर्ग्रसते न वा मृगदृशां वक्त्रैः पराजीयते ।
नो मेघैश्च पिधीयते न च कुहूकालेऽपि संक्षीयते
श्रीराम क्षितिपाल भाति जगति त्वत्कीर्तिचन्द्रः सदा ॥८३॥

वेणीदत्तस्यैतौ ॥

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैव प्रनिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगान्ते विलसति च पुरः किं मया तेऽभिवाच्यं
प्रोच्यैवेति प्रको[पा]च्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥८४॥

कस्यापि ॥

उग्रग्राहमुदन्वतो जलमतिक्राम्यत्यनालम्बने
व्योम्नि भ्राम्यति दुर्गमक्षितिभृतां मूर्धानमारोहति ।
व्याप्तं याति विषाकुलैरहिकुलैः पातालमेकाकिनी
कीर्तिस्ते मदनाभिराम कृतकं मन्ये भयं योषिताम् ॥८५॥

दण्डिनः ॥

किं वृत्तान्तैः परगृहगतैः किन्तु नामासमर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा देव कीर्तिः ॥८६॥

कस्यापि ॥

कीर्तिः श्रीरघुवंशरत्न भवतः स्वर्वाहिनीगाहिनी
दिक्पालान् परितः परीत्य दधती पाण्योः प्रतापानलम् ।

# संस्कृत-नाटकानि

( पूर्वानुवृत्तिः )

[ निबन्धकः—वि. कृष्णरामप्पय्यङ्गार्यः ]

भरतशास्त्रे चानुवादरूपेण कानिचित्पद्यान्युदाहृतानि दृश्यन्ते। प्रायशः पूर्वेषां लाक्षणिकानां ग्रन्थादुद्धृतानीमानि स्युरिति संभाव्यते। तेषां ग्रन्थानां तत्कर्तॄणां वा नामानुल्लेखात् किमपि निर्णयपदवीं नाधिरोहति। अस्मिन्भरतशास्त्रे प्रायशोऽनुष्टुवि वृत्ते निबद्धाः श्लोका वैपुल्येनावलोक्यन्ते। महाभाष्यस्य शैलीमनुकुर्वाणश्च गद्यं तत्र तत्रोपनिबद्धं दृश्यते। अथाप्यस्य शास्त्रस्य "नाट्यसूत्र" मित्येव व्यवहारः प्राचुर्येण दृष्टः। प्रायशः पूर्वकाले सूत्ररूपेण निबद्धं शास्त्रमर्वाचीनैर्मंदितयवबोधाय श्लोकरूपेण परिवर्तितं भवेदिति बहवोऽभिप्रयन्ति। केचित्तु 'पूर्व- विस्तृतरूपेणावस्थितस्य सूत्रात्मकस्य शास्त्रस्य संग्रहोऽयं श्लोकमयो ग्रन्थ' इत्याशेरते। एतस्य च सूत्रसमुदायस्य कालः क्रि. पू. प्रथमं द्वितीयं वा शतकं स्यात्। तत्रोपन्यस्तास्सर्वेऽपि विषया नैकस्यैव ग्रन्थकर्तुः परिचिता आसन्, अपि तु कालान्तरे पण्डितैरन्यैः प्रक्षिप्ता इति केचन विमर्शकाः स्वाभिप्रायमाविष्कुर्वते।

अस्मिन्नाट्यशास्त्रे सप्तत्रिंशदध्यायाः सन्ति। आदिमाः पञ्चाध्यायाः पीठिकारूपाः, अन्तिमौ द्वौ तु उपसंहाररूपाविति ग्रन्थपरिचयवतामविषयाः परोक्षम्। मध्यगताश्च त्रिंशदध्याया रंगविषयानुपन्यस्यन्ति। पीठिकाप्रकरणे च नाट्यस्योत्पत्तिः, प्रयोजनम्, मंडपनिर्माणक्रमः, पूर्वरंगविधानञ्चेत्यमी विषयाः प्राधान्येन निरूपिताः। षष्ठसप्तमयोरध्याययो रसभावाः, अग्रे पञ्चसु आंगिकाभिनयः, उत्तरत्र ( १४-१९ ) षट्सु वाचिकः, उत्तरत्र च (२१-२६) सप्तस्वाहार्याद्भिरभिनयो विस्तरेण लक्षितः। त्रयोदशे धर्मौ, विंशे वृत्तिः, सप्तविंशे सिद्धिः, ततोऽग्रे (२८-३४) सप्त-

ऽध्यायेषु स्वरादिसम्बद्धा विषयाः, पञ्चत्रिंशे रंगविषयका इतरेऽशाश्च यथावत्प्रतिपादिताः। प्रवृत्तिरपि त्रयोदशाध्याये प्रपञ्चिता। अन्तिमयो-रध्याययोर्भरतशास्त्रस्य स्वर्गाद्भूलोकावतरणमुपवर्णितमित्येतावानस्य शास्त्रस्य विषयविभागः। नाट्यविमर्शे प्रवृत्तानि ग्रन्थान्तराणि शास्त्रमेतत्प्रमाण-मवलम्ब्य विरचितानि। एतादृशं सर्वविषयव्यापकं संगृहीतरूपमपि विस्तृतविमर्शस्थानं प्रामाणिकाभिमतं शास्त्रान्तरं संस्कृतभाषायां नास्त्येव।

अर्वाचीनाश्च स्वाभिमतं विषयमुपादाय प्राग्विभागान्कविताभिनय-संगीतादीन्विभेदान् यथामति विचारयामासुः। अत्र च साहित्यचर्चाया अन्ये लक्षण- नाट्यशास्त्रस्य संगीतविद्याया वास्तुशिल्पस्य च परस्पर- ग्रन्थाः वार्तानभिज्ञतया विभागोऽवकाशमलभत। येनार्वाचीनैर्विम-र्शकैरेकस्मिन्नेव ग्रन्थे सर्वेषामेषां विषयाणामुपसंग्रहो दुष्करः पर्यणंसीत। तत्र क्रिस्तशके दशमशतके निर्मितो धनंजयस्य दशरूपकाख्यो ग्रन्थः चतुर्ष्वेवाध्यायेषु दश रूपकाणि, तेषां वस्तु-पात्र-रसाणां स्वरूपञ्च विवृणोति। शारदातनयस्य भावप्रकाशनामा ग्रन्थः, दशस्वधिकारेषु भावं रसं नायकयोः स्वरूपं प्रभेदान् शब्दार्थसम्बन्धं रूपकाण्युपरूपकाणि च परमतप्रतिक्षेपपूर्वकं विचारयति। एष च ग्रन्थः क्रि. श. १२०० तमे वर्षे जन्मालभत। क्रि. श. चतुर्दशशतके विद्यानाथेन विनिर्मितं प्रताप-रुद्रीयमपि दशरूपकमेवानुसरत् काव्यलक्षणानीषदिव निरूप्य प्राधान्येन रूपकाणि विमृश्यालङ्कारानपि लक्षयति। एतत्समकालिकी च विद्याधर-स्यैकावली प्रतापरुद्रीयमेवानुकरोति। एकस्मिन्नेव काले समानं विषय-मधिकृत्य ग्रन्थद्वयनिर्माणमभिन्ननिरूपणक्रममाश्चर्यमावहति। प्रतापरुद्रीये चोदाहरणार्थं विद्यानाथेन विरचितमेकं चतुःषष्ठ्यंगैर्विशिष्टं नाटक-मन्तर्भवति। ततोऽनन्तरं पञ्चाशत्सु वर्षेष्वतीतेषु विश्वनाथेन प्रणीत-'साहित्यदर्पणः' दृश्यकाव्यपरीक्षारूपेषु चतुर्ष्वध्यायेषु (३-६) रूपकाण्युप-रूपकाणि वस्तु पात्रं रस इत्यादिकान्विषयान्विस्तरेण वर्णयति।

'रीतिरात्मा काव्यस्य' इत्यादयः प्राचीनानां प्रवादा वैदर्भ्यादीनां

रीतीनामेव काव्यशोभावर्धकता प्राचीकटन। काव्यानामुत्कर्षो हि रचना-भंगीमवलम्बते। गुणालङ्कारादीनि स्वस्वोपकारकाणि शोभावृद्धौ सहकारं पुष्णन्तीत्येषामाशयः। एवमेव प्रसादमाधुर्यादीनां शब्दवृत्तीनामर्थाश्रयाणाञ्च दण्डिप्रमुखैर्लाक्षणिकैर्विस्तृतानां गुणानामेव प्राधान्यमित्यन्येषां वादः कदाचिदातिशायनिकीमवस्थामापेदे। अदोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यमिति प्रतिपादयन् विद्यानाथस्तु काव्यशोभोत्कर्षकता गुणालङ्कारयोरविशेषेण विभक्तामभिप्रेयाय। कालक्रमेण च नवीनाः काव्यस्यात्मा रस एवेत्यूरीचक्रिरे। अत एव व्यञ्जनाप्रधानानि काव्यानीति प्रवादोऽपि संगच्छते स्म। वश्यवाचा कविवरेणोपयुक्तानि तात्पर्यप्रत्यायनसमर्थानि प्रसादादिगुणगणगुम्फितान्यलङ्कारसंभृतशोभानि रसमभिव्यञ्जयन्ति, यस्य पुनश्चर्वणेन सामाजिकानामानन्दानुभवः संपद्यते। व्यञ्जनाप्रपञ्चश्च परिष्कारपद्धतिं प्रौढमतीनामपि दुरवगाहां स्वीकृत्य जगन्नाथादिभिर्विद्वत्कुलावतंसैरसविस्तरमुपवर्णितः। एवं प्रवृत्ते वादकोलाहले रसस्वरूपविवेचनं श्रव्यकाव्यमीमांसकानामप्यावश्यकं प्रत्यभासीत्। अत एव रसगंगाधरे नाटकविषयाणां मनागप्यसंस्पर्शेऽपि विस्तरेण रसस्वरूपं भावानां स्वरूपमित्यादयो विषयाः प्रतिपक्षनिराकरणपूर्वकं महता प्रबन्धेन नैयायिकातिशायिन्या लक्षणपरिष्कारसरण्याऽव्याप्त्यतिव्याप्त्यादिदोषपरिहारानुगुणमुपन्यस्ताः। श्रव्यकाव्येष्वपि रसोद्बोधः सिद्धान्तितः। अत एवार्वाचीनेषु लक्षणग्रन्थेषु सर्वत्रापि रसविचारः प्राधान्येन विमर्शभूमिमवतरति। तत्र च क्रि. श. एकादशशतके भोजराजेन विनिर्मितं सरस्वतीकण्ठाभरणं, चतुर्दशशतकस्थितेन शिंगनृपतिना विरचितो "रसार्णवसुधाकरः" इत्यादयो ग्रन्थाः प्रधानतया व्यपदेशमर्हन्ति। संगीतशास्त्रसम्बद्धा वास्तुशिल्पशास्त्रसम्बद्धाश्च विषया ग्रन्थान्तरेषु बहुधा प्रतिपादिता दृश्यन्ते। परन्तु संगीतादीनामत्रास्माभिरप्रतिपिपादयिषितत्वात्ते ग्रन्था उपेक्षिताः, येन सामान्यप्यनिर्दिश्य परित्यक्ताः।

नाटके तावन्नाट्यमेव प्रधानमंगं परिगण्यते। नटधातोर्निष्पन्नोऽयं

शब्दः। नटधातुश्च पाणिनीयधातुपाठानुसारेणावस्कन्दनमभिदधाति। नाट्यम् अवस्कन्दनञ्चात्र गात्रविक्षेपमात्रम्, शब्दशक्तिस्वारस्येन चालनरूपस्यार्थस्य झटिति प्रतीतिदर्शनात्। तस्माच्चौरादिके स्वार्थे णिचि कृतेऽजन्तत्वात् 'ऋदो य'दिति कर्मणि यत्कृत्प्रत्ययः। तथा च नाट्य' नामांगचालनसाध्यमवस्थाकरणमिति सिद्धम्। अवस्थाश्चात्र फलसिद्धये नायकेन स्वीकृतस्योपायस्य, याः किलारम्भयत्नप्राप्त्याशानियताप्तिफलागम-भेदेन पञ्चधा लाक्षणिकैर्विभाविताः। तासामनुकरणमंगचालनादिव्यापार-साध्यं नाट्यमित्यामनन्ति। एतच्च सामाजिकेषु रसोद्बोधायाभिनेयतादात्म्या-पत्तिरूपमिति व्याख्यातारः। कौमुद्यामपि णटधातोर्नृत्यर्थकस्य व्याख्या-नावसरे इत्थमेव पूर्वमपि पठितम्। तत्रायं विवेकः। पूर्वं पठितस्य नाट्यमर्थः, यत्कारिषु नटत्वव्यपदेशः। वाक्यार्थाभिनयो नाट्यम्। घटादौ तु नृत्यं नृत्तं चार्थः, यत्कारिषु नर्तकत्वव्यपदेशः। पदार्थाभिनयो नृत्यम्। गात्रविक्षेपमात्रं नृत्तमित्यभ्यधायि। तत्र च वाक्यार्थो रस एवेति साहित्यतत्त्वविदामनुशासनाद्धीरोदात्ताद्यवस्थानुकृतिर्नाट्यं रसाश्रय मिति वदतो विद्यानाथस्य कौमुदीकारेण साकमविरोधः। रसविषयं सात्त्विकबहुलं नाट्यम्। भावविषयमांगिकबहुलं नृत्य'मिति च व्याख्या-कारैः प्रत्यपादि। भावानां पदार्थत्वात्तद्विषयकाभिनयो नृत्यमित्येषामाशयः। तत्र 'णट नृत्ता'विति पठिताद्धातोर्व्युत्पन्नो नाट्यशब्दः कौमुदीमतानुसारेण वाक्यार्थाभिनयमभिदधाति। अत्र च हलन्तादस्माद्धातोर्ण्यत् कृत्य-प्रत्ययः, तस्य णित्वादुपधावृद्धिश्च। एवं स्थिते नट अवस्कन्दन इत्य-स्मादौषचलनार्थकात् ण्यदिति वदन् प्रतापरुद्रीयव्याख्याता रत्नापणकारः कुमारस्वामिसोमपीथी परास्तः, णिचि कृतेऽजन्तत्वेन ण्यतोऽप्राप्तेः। तथा च रसाश्रयो नायकावस्थाभिनयो नाट्यमिति सिद्धान्तितम्।

( क्रमशः )

अज्ञानेन्धनवीतिहोत्र करुणागम्भीरवारान्निधे
दीनत्राणकर प्रचण्डतडित(?) ध्वान्तावलीभास्कर ।
मग्नं वारिनिधौ कृतार्थय कृपालेशेन दासं निजं
निर्गन्धां पृथुकण्टकां सुकठिना वल्लीं वसन्तो यथा ॥३६॥
एतन्निशम्य गदितं दमनस्य देवो
मन्दं विहस्य दरलोलकिरीटकोटिः ।
आनन्दयन् करुणनेत्रविलोकितेन
प्रत्युत्तरं नरपताविदमाह नम्रे ॥३७॥
जानामि भूप भवतो मयि चित्तमार्द्रं
सम्पादितञ्च भवता प्रियबन्धुकृत्यम् ।
उक्तञ्च यद् यदपि तत्तदये तथैव
मद्‍व्याहृतान्यपि मनागवधेहि धीर ॥३८॥
त्वच्छ्रद्धया श्रुतिनिदेशितचेष्टितेन
प्रेम्णापि बद्धहृदयः सविधं वसामि ।
सांसारिकीमपि दशामनुवर्तमानः
पुत्रं वधूं तव गृहात स्वपुरं नयामि ॥३९॥
मायाविकल्पितसुखे स्थिरधीर्न योग्या
योग्या मदीयकुहकादखिलानि तत्र(?) ।
एतानि नश्वरतया प्रभुनिर्मितानि
तैः किं फलं भवति दीर्घसमागमेन ॥४०॥
वैक्लव्यं त्यज भूप साधु सहजं धैर्यं भजस्वान्तरे
दैवाधीनजने मनोरथकथा तारल्यसम्पादिनी ।
यूयं धीरतया जगत्सु विदिताः ख्यातं यशः पालय
किं बालप्रतिमः स्वभावविकलः स्नेहाद्वृथा मुह्यसि ॥४१॥
इति निशम्य हरेः कृपयोदितं
हृदि विचिन्त्य चिरं स महीपतिः ।

अपगतान्तरतुन्दिलवेदनः
स्मितमुखः प्रभुसम्मुखतः स्थित ॥४२॥
अथ तदिङ्गितविज्ञपुरोहितः
परिजनैः पुरमध्यनिवेशितः ।
स्खलितनेत्रजलो ललनाजना-
न्नृपसुतागमनाय जगाद सः ॥४३॥
तदनु तद्गदितं पुरयोषितः
श्रवसि वज्रनिभं बत मेनिरे ।
प्रणयपाशनिबद्धहृदो मुहु-
र्मुहुरेव चिरं परितोऽङ्गनाः ॥४४॥
अङ्के विधाय तनयां जननी मृदूना
वक्त्रे निधाय वदनं स्वभुजौ च कण्ठे ।
अश्रूणि मुञ्चति विनिन्दति दैवतञ्च
शोचत्यतीव करुणं विविधानि राज्ञी ॥४५॥
मातर्विनाऽद्य भवती भवनानि शून्या-
न्यालोकयिष्यति कथं जननी त्वदीया ।
रेवेति वक्ष्यति च का तव लोभनीयं
कस्यै च दास्यति करेण सुदुर्मनासौ ॥४६॥
त्वां भूषयामि वदनं तव मार्जयामि
त्वां लालयामि हृदये च निवेशयामि ।
अद्य त्वया विरहिता बत किं करिष्ये
नद् यान्तु यान्तु कठिनान्यपि जीवितानि ॥४७॥
त्वरयति पुरवृद्धे कृच्छ्रतो मातुरङ्कं
नयनजलनिपातैरार्द्रयन्ती विहाय ।
स्तनविनिहितवक्त्रा सा मुखं वीक्षमाणा
करुणमभिलपन्ती पादयुग्मं ननाम ॥४८॥

समालिङ्ग्य स्नेहाद् हृदि विनिहिता हन्त तनयां
मुखं वीक्ष्याचुम्ब्याविरलविगलन्नेत्रसलिला।
कपोलौ संमार्ष्ट क्षरितकुचधाराचिततनु-
स्ततो राज्ञी रेवा मसृणमसृणं शिक्षितवती ॥४९॥
नम्रत्वं गुरुषु प्रभौ सरलता बन्धौ दया पूरुषे
चान्यस्मिन विषधीर्बहिर्न गमनं लोभ्ये तितिक्षा परा।
मौनं विप्रियवादिनि प्रियकथा भृत्येषु धर्मे रति-
र्मतिर्धर्मे इतीरितः कुलभुवां चित्ते दृढं धारय ॥५०॥
ततोऽसौ पश्यन्ती दिशि दिशि सखी रोदनवती-
र्वचोभिर्वृद्धानां मसृणमसृणं गच्छति गृहात।
पुराद् यान्त्यामस्यां करुणकरुणं यत्तद्भव-
स्तदन्तर्बाष्पौघस्थगितवदनः किं रचयतु ॥५१॥
सखीनां श्रुत्वासौ स्वगुणमिलितं काकुलपितं
क्षिपन्ती वैक्लव्यात सजलनयनं नम्रवदना।
दिवानाथस्पर्शाद्गलितनवनीतप्रतिनिभं
वपुर्धत्ते रेवा प्रभवति मनाग् नैव विरहात ॥५२॥
प्रियाण्यस्या यानि प्रणयविधुरास्तानि विनया-
द्यथानिन्युः सख्यः करुणनयना वीक्ष्य वदनम्।
निगूढं तत्पाणौ ददति च ततश्चित्रफलकं
समो यत्नाल्लब्धं निधिमिव बलादेव नयति ॥५३॥
समालिङ्ग्य प्रेम्णा करुणलपितैषा सहचरीं
प्रणम्याथ ज्येष्ठा विनयवचनास्राविलमुखी।
बहिर्याता पुर्याः प्रियधृतकरारोहति रथं
सुमेरोरैशान्या दिश इव विधुः पूर्वमचलम् ॥५४॥
ततो भेरीध्वानैः करितुरगयोधध्वनिभरै
रथानां नेमीनां बहलबहलैर्घर्घररवैः।

क्षीणाङ्गोत्थितदीर्घदीर्घधमनिव्यापारतपःक्लेशितान्
भूदेवान् प्रणम प्रिये क्षितिमिलन्मौलिर्विलम्बं त्यज ॥६८॥

देवी। (ससम्भ्रमं तथा करोति) नाथ क्षणमत्र रथं विश्रामय।
अदृष्टपूर्वाणि ईदृशतपोवनानि। तथाहि—

नवनवतरुशोभा लोभयत्याशु दृष्टिं
सुखयति मम गात्राण्यालवालाम्बुवायुः।
सुरभिकुसुमगन्धा मानसं मोदयन्ति
ह्यभयहरिणशावाः पाणिमुत्कण्ठयन्ति ॥६९॥

अपि च

नानापुष्पितपादपः प्रतिदिशो नृत्यन्मयूरा स्थली
शाखायामभया पठन्ति किमहो सामानि शुद्धं शुकाः।
माध्वीकान्नमधुरं कपोतमधुलिट्पुंस्कोकिलैर्गीयते
आघ्रातुं रथवाजिनामपि मुखान्यायान्ति मुग्धा मृगाः ॥७०॥

तदत्र क्षणमवस्थातुमिच्छामि

समः। प्रिये युज्यते। अत्र हि महर्षिरष्टावक्रः प्रतिवसति तदवहेलन मनुचितम्। (सारथिं प्रति) अये सौभद्रक! यावदावां महर्षिमष्टावक्रं प्रणम्या गच्छावस्तावदश्वान् पालय।

सौभ। यथाज्ञापयति देवः। (इति तथा करोति)

सम.। (परिजनान् प्रति) अयमुमत्तपोधनस्तद्यूयमत्रैव तिष्ठत। (इत्युभौ गच्छतः)

समः। प्रिये एहि, एहि, पश्य

तरूणां नैबिड्यान्मिहिरकरलेशो न धरणौ
प्रभावैः पुण्यानां कुसुमितमिदं सर्वमभवत्।
सुपक्वैः सुस्वादैर्बहुतरफलैर्नम्रविटप-
स्तवातिथ्यं मन्ये किसलयकरेणैव कुरुते ॥७१॥

एतदप्यवधेहि।

पीवरस्तबकरातकुचोज्ज्वला
मन्दमन्दपवनेन कम्पिता ।
लोलपल्लवकरेण सादरं
त्वां समाह्वयति माधवीलता ॥७२॥

समः। प्रिये !
उन्नतस्तनयुगात सकुट्मला
याऽधरेण नवपल्लवाञ्चिता ।
मन्दहासकुसुमेन शोभिता
त्वां विना किमप वात वोः प्रियाः (?) ॥७३॥

रेवा। ( सलज्जमधोमुखी तिष्ठति )

सम । प्रिये अत्र कुसुमावचयनमिच्छामि ।

रेवा। नाथ तपोधनानामाश्रमपदमिदम् ।

समः। ( सविस्मयं ) साधु स्मारितम् (इत्यग्रतो गच्छति)

उत्फुल्लकण्ठं क्षितिलग्नपुच्छं
विस्फारिपक्षं दरलोलमौलि ।
विन्यस्ततुण्डं वदने प्रियायाः
पारावतः क्रीडति पश्य पश्य ॥७४॥

अन्यतोऽवलोकयन प्रिये, एतदवलोकय ।

भ्रश्यद्बंधनमंसदेशविचलत्केशं नमत्कन्धरं
हस्तन्यस्तनतोन्नतैकमुषलं स्वेदार्द्रकम्पिस्तनम् ।
वारं वारमुदूखलाहितपदप्रव्यक्तगूढस्थलं
नीवारानवहन्ति तापसवधूरेणोऽपि तां जिघ्रति ॥७५॥

नहा भूषणवञ्चिताः कुटिलतासम्पर्कशून्या दृशः
ईहा बाळनिभाः कचा विकलिता मान्थर्यहीना गमा. ।
साकूता न गिरः कुरङ्गवनिताः मुख्योऽप्यमूषा तथा-
प्यानन्दं जनयन्ति लोचनपथ यातास्तपस्विस्त्रियः ॥७६॥

अङ्गं धूलिविधूसरं विकलितौ वक्षोरुहौ वल्कले-
नासौ नेत्रमनञ्जनं स्मितसुधाशून्योऽपि बिम्बाधरः ।
पाणिः काननसेवनाहितकिणो रूक्षाः परं कुन्तलाः
स्वर्वेश्या अपि तुच्छयन्ति यदमूस्तत् किं तपोयोगतः ।।७७।।
हन्त निर्दया एव तापसाः, यैर्हि—
मालतीकोमलः पाणिः कठिनेषु नियोज्यते ।
नवनीततनुर्भानुकरेषु परित्यज्यते ।।७८।।

रेवा । नाथ ! परिचर्याममूषान्तु करोमि यदि मन्यसे ।
विश्रामयितुमेता हि मम चेतः समीहते ।।७९।।

समः । प्रिये ! साधु ते चेतः, किन्त्वीदृशे कर्मणि अनभिज्ञासि, अहन्तु त्वत्सम्भ्रमात्र परिचरामि ।

रेवा । मैवं मैवम् ।
एको विवस्वान्छतपद्मिनीना-
मेकः शशी कोटिकुमुद्वतीनाम् ।
एकोऽपि देवो बहुगोपिकानां
नाथस्ततोऽभूद्विमलैव कीर्त्तिः ।।८०।।

समः । प्रिये ! तवोचितमिदमुक्तम् । किन्तु नाहन्तथाविधस्त्वमेव जानासि ।
यथा नलस्तन्वि विदर्भजाया
रघूद्वहो वा जनकात्मजायाम् ।
यथैव बद्धोऽप्यज इन्दुमत्यां
तथा पृथिव्यां प्रथितोऽयमस्याम् ।।८१।।
शीतवायुरपि मे खररश्मिः
कल्पवल्लिरपि मेऽग्निरवल्ली ।
दक्षिणोऽपि पवनो मम वाम-
स्त्वां विना हि मदनोऽपि कृतान्तः ।।८२।।

निहन्यमानस्य ततः क्षणेन हिंस्रेण तारस्वरमार्त्तरावः ।
पशोरुदीर्णो गगनान्तराले कारुण्यमन्तर्महता तनोति ॥२०॥
चिरेण सूरस्य करेण पृथ्वी या लालिता रागमयोपचारैः ।
तदीयविच्छेदशुचा परीता सा हन्त घोरे तिमिरे निमग्ना ॥२१॥
अहो नियत्या विपुलः प्रभावो लोकातिगं धाम गतोऽपि सूरः ।
नियन्त्रितं कालमतीत्य नित्यं निमग्नतामेति पयोधिपूरे ॥२२॥
सुरानुषङ्गी विलसत्सुवर्णः प्रशस्तरागः प्रथितप्रतापः ।
सिंहासनस्थोऽपि च सैंहिकेयवैरी खरांशुः पतति प्रदोषे ॥२३॥
छाया निजाङ्गी तिमिरं भवन्ती निशानुवृत्तिं विदधाति नित्यम् ।
रविः सरागोऽपि ततो निशाया मुखं न शक्तः परिचुम्बितुं तत् ॥२४॥
हिंस्राः परप्राणहरा निशायां जाराः परस्त्रीषु तथा रमन्ते ।
दोषाः किलान्येऽपि दुरन्तरूपाः किं वा तमस्त्वं समवापुरस्याः ॥२५॥
नीलाम्बरा संवृतरम्यभूषा कान्ताभिसाराय गृहं त्यजन्ती ।
सङ्केतदेशं प्रति भीतभीता प्रयाति काचित्तिमिरेष्वदृश्या ॥२६॥
कान्ताशया काचिदपेक्षमाणा चिरोत्तरं प्राप्तमवेक्ष्य कान्तम् ।
सापत्न्यरोषेण समुज्ज्वलन्ती वाचापि नास्यार्चनमाचचार ॥२७॥
वृथैव किं कुप्यसि मह्यमत्र प्रसीद कान्ते परिमुञ्च मानम् ।
पादोपकण्ठे पतता प्रियेण वाचानयाऽस्या दलितोऽभिमानः ॥२८॥
द्वितीययामे रजनौ प्रवृत्ते शान्ता क्रियाऽन्यत्र यथा क्रमेण ।
वाराङ्गनानां भवने तथैव नृत्यादिकृत्यानि विवृद्धिमीयुः ॥२९॥
क्षणेन रिक्तं विदधे विलासी पूर्णं सुरापात्रमपत्रपात्मा ।
पीत्वा च मद्यं गणिका विलज्जा स्खलत्पदं गीतमुदाजहार ॥३०॥
तद्गेहवातायनरन्ध्रमुक्ता ज्वलत्प्रदीपावलिरश्मिधारा ।
रम्या कषप्रस्तरलग्नरेखा सुवर्णरेखेव तमःसु रेजे ॥३१॥
नगर्यरथ्याविपणिप्रतानाः समाप्तदैनन्दिनकृत्यभाराः ।
पान्ति स्म पण्यानि कवाटरुद्धाः परस्वचौर्यप्रियतस्करेभ्यः ॥३२॥

वने गभीरे तिमिरे विलीना द्रुमावली दृष्टिपथाद् व्यतीता ।
स्वकोटरालीनविहङ्गसङ्घैरुवाच सत्तां कलमालपद्भिः ॥३३॥
शुभ्रप्रसूना लतिका निशायामपुष्पमुद्वीक्ष्य तरुं महान्तम् ।
धातुः कृपामात्मगतां विदित्वा पुष्पस्मितेनोपजहास किं वा ॥३४॥
निद्राव्यपायेन गतप्रबोधं बालं स्वकं दुर्ललितं रुदन्तम् ।
माता नदत्कौशिकघोरनादं संश्राव्य शान्तिं नयति स्म कामम् ॥३५॥
गृहे महेन्द्रोपमचन्द्रकेतोः क्षपा प्रदीपैर्दिवसायमाना ।
रक्षाविधानाधिकृताः सशस्त्रा नराः सुदक्षाः परितो विचेरुः ॥३६॥
द्वौ द्वौ प्रतिद्वारि नरौ नियुक्तावनेककक्षे भवने नृपस्य ।
परस्पराह्वानपदानुबन्धैः स्वं वेदयामासुरमी प्रबोधम् ॥३७॥
पीनप्रदीपद्युतिदृश्यरूपे यत्र प्रकोष्ठे महिषीसहायः ।
सुष्वाप भूपः प्रचितप्रसादं न तत्र रक्षाधिकृताः पुमांसः ॥३८॥
काचित् प्रतीहारपदे नियुक्ता काचित्तथा चामरलोलहस्ता ।
पुष्पोपहारे नियता च काचित् सुगन्धधूपज्वलने तथान्या ॥३९॥
सुवर्णपर्यङ्कतले सुरम्ये मुक्तावलीमञ्जुलसद्विताने ।
नीलद्युतिप्रच्छदसंवृताङ्गे सुनीलकौशेयमयोपधाने ॥४०॥
सुगन्धिसूनावलिपूतपृष्ठे समीपसंस्थापितपादपीठे ।
निद्रानिमीलन्नयनास्ततन्द्रौ राजा च राज्ञी च गतौ सुषुप्तिम् ॥४१॥
सुगन्धिसूनस्तवके निषण्णा द्विरेफमाला ललितं रुवन्ती ।
सुतालवैतालिकभूयमेत्य जगावलं सद्मनि सुप्तिमन्त्रम् ॥४२॥
वधनविच्छिन्नगतिप्रवाहं मुहुश्चलच्चामरवातभिन्नः ।
प्रतिक्षणं गुग्गुलुधूपधूमः प्रसारितोऽभूत् परितो गृहान्तः ॥४३॥
प्रभूतमैश्वर्यगुणं समीक्ष्य किं चन्द्रकेतोरमरावती वा ।
इन्द्रभ्रमात् कङ्कणमावसन्ती नृपं सिषेवे तमभिन्नरागैः ॥४४॥
याम्ये नृपस्यावसथाददूरे मन्दाकिनी किं सरसीच्छलेन ।
सुशीतसद्गन्धमृदुप्रचारैः समीरणैस्तर्पयति स्म भूपम् ॥४५॥

भूपालसौभाग्यभरोपनीतो न हीयते तत्र सुखोपचारः ।
परस्परस्पर्द्धितयेव वृद्धिं प्राप्ता विरेजुः सुतरामुपायाः ॥४६॥
राज्ञीशरीराभरणद्युतीनां समागमेन द्विगुणीकृताभिः ।
प्रदीपनिष्ठ्यूतसितप्रभाभिर्मेने निशा तत्र दिनायमाना ॥४७॥
एवं पुरे तत्र निरस्तदोषे मनोरथेनापि च दुष्प्रवेशे ।
मायामयः शाश्वतसत्यदेवश्चकार चौर्याभिनयं निशायाम् ॥४८॥
संपश्यतामेव तदा जनानां तन्मायया मूढविलोचनानाम् ।
सुप्तिं नृपेणैव समं गताया हारं महिष्याः स जहार सत्यः ॥४९॥
हृत्वा स हारं नृपतेः पुरान्तात् स निर्गतो लक्षपतेर्निशान्ते ।
निक्षिप्य तं तल्पतले तदीये खज्योतिपि प्राप लयं क्षणेन ॥५०॥
नानाविधध्यानवितीर्यमाण-स्वप्नौ तदानीं वणिजौ विमूढौ ।
न जज्ञतुस्तौ व्यसनं पुरस्तात् सत्यस्तु नित्यः प्रततान हास्यम् ॥५१॥
न तस्य चौर्यानुगतिर्नवीना गोपीदुकूलावलितस्करस्य ।
पुरा यशोदानवनीतहर्त्तुः रूपादिभिर्योगिमनोहरस्य ॥५२॥
यथेन्द्रजालेन कृतापि हिंसा पापं न सूते भुवि मायिकानाम् ।
तथैव मायारचितेन तस्य चौर्येण दोषो न पदं बधार ॥५३॥
जीवोऽथवा कर्म दधाति नान्यो जीवाद्विभिन्ने नहि तत् परेशे ।
अशस्तमप्यस्तमितापकर्षं संस्पर्शतस्तस्य महामहिम्नः ॥५४॥
लोहं सुवर्णत्वमुपैति लोके स्पर्शाभिधानस्य मणेः प्रभावात् ।
गङ्गाजले कूपपयो निषिक्तं शक्तिं व्रजत्येव मलापहारे ॥५५॥
केषाञ्चन स्वापसुखं श्रितानां केषाञ्च बंधे विहिते रतानाम् ।
केषाञ्च कामव्यसने स्थितानां निशा व्यतीयाय समं तमोभिः ॥५६॥
सार्द्धं महिष्या वसुधाधिनाथः सुप्तिव्यलीकं विजहत् प्रबुद्धः ।
विहाय संसारमयं तमोऽन्धं यथात्मबोधं विमलं मुमुक्षुः ॥५७॥
आताम्रनेत्रां विकलाङ्गरागां विस्रस्तकेशां कलितां जडिम्ना ।
राज्ञीं प्रपश्यन्नथ लोकपालः शङ्कुमुक्तमस्याः स ददर्श वक्षः ॥५८॥

अथाह भूपालमणिः प्रियां स्वां कान्ते । कुतस्ते ननु रत्नहारः ?
कण्ठस्तवायं मणिहारमुक्तः शोच्यत्वमाप्तो न विरोचते मे ॥५९॥
किं सुप्तिसौकर्यमपेक्ष्य रात्रौ हारं क्वचिन्न्यस्तवती स्वयं त्वम् ?
दीनाय वा दत्तवती दयार्द्रा न वा मनोज्ञस्तव सोऽयमास्ते ? ॥६०॥
श्रमेण शिल्पिप्रवरैश्चिरेण हारो विचित्रो घटितस्तवायम् ।
सौभाग्यतो वक्षसि सन्निषण्णः केनाद्य दोषेण ततो वियुक्तः ॥६१॥
प्रसीद हारं प्रति देवि ! दिव्ये कण्ठे समामुच्य तमेधयस्व ।
कण्ठं तव प्रापयतां रुचं स प्राप्नोतु शोभामपि तेन कण्ठः । ६२॥
अलङ्कृतेः सार्थकता तु सैव यद् योग्यमङ्गं समलङ्करोति ।
अङ्गेन योग्येन समं वियोगस्तदीयदौर्भाग्यफलं न चान्यत् ॥६३॥
प्रोक्ता तथा भूपवरेण राज्ञी स्वरावली दृष्टवती स्ववक्षः ।
हारेण हीनञ्च विलोक्य तत्र सा ममज्ज चित्राब्धितरङ्गपूरे ॥६४॥
उवाच राजानमथो विलोला हे नाथ जानामि न किञ्चिदत्र ।
यं पूर्वरात्रे समपश्यमेषा सुप्तोत्थिता सम्प्रति तं न लोके ॥६५॥
प्रीत्या त्वया हारमिमं प्रदत्तं सदा सुखेनैव समुद्वहामि ।
तेनाधुना प्रीतिभृता वियोगः शोकाय जातो मम दुस्तराय ॥६६॥
तत् किं सखीभिः परिहासहेतोः संगोपितो हारवरो ममायम् ।
सुरक्षिते राजपुरे कथञ्चिन्न तस्कराणामिह सम्प्रवेशः ॥६७॥
एवंविधं संवदतोस्तदानीं नृपस्य राज्ञ्याश्च विशेषचित्रम् ।
ससम्भ्रमास्तत्र समेत्य सख्यो दास्यश्च भीताः परितो विचिक्युः ॥६८॥
पुनः पुनस्ताः प्रविचित्य तस्मिन्नन्यत्र चापि प्रहतप्रयत्नाः ।
निःसंशयं चौरहृतं विदित्वा निवेदयाञ्चक्रुरिदं नृपेन्द्रम् ॥६९॥
राजेन्द्र चौरैरतिदक्षरूपैर्हारो महिष्या नियतं गृहीतः ।
चिरं सुवृत्तेन कृतौ रतेषु नो संशयं कर्त्तुमलं जनेषु ॥७०॥
प्राणेषु नो निःस्पृहता गताः स्मो वृत्तिः सुवृत्तेन हि रक्षिता स्यात् ।
नालं भवान् संशयितुं ततो नः प्रसीद निःसंशयदृष्टिपातैः ॥७१॥

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भाषालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| June, 1942 | १८६४-शकीये ज्यैष्ठे<br>२५श-वर्षस्य २य-संख्या | Vol. XXV<br>No. 2 |

सुन्दरदेव-संकलितः

## सूक्तिसुन्दरः

[डाः श्रीयतीन्द्रविमलचतुर्धुरीण-सम्पादितः]

( पूर्वानुवृत्तिः )

सप्ताम्भोनिधिमण्डलान्यधिगता त्वय्येकपत्नीव्रत-
ख्यात्यै विष्णुपदं स्पृशत्यनुदिनं शेषस्य शीर्षाण्यपि ॥८७॥

हनूमतः ॥

स्नातुं वाञ्छसि किं मुधैव धवल-क्षीरोदकाच्छच्छटा-
च्छायाहारिणि वारिणि द्युसरितो दिक्पूरविस्तारिणि।
आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा
कीर्तिः सन्निहितेव सप्तभुवनस्वच्छन्दमन्दाकिनी ॥८८॥

स्वत्तेजःप्रतिभाभयादपसृताः प्रत्यर्थिभूभृत्स्त्रियः
कान्तारे घनकण्टकीद्रुमवनव्यस्तप्रयुक्ताम्बराः।

आर्याणां पुरतस्त्रपापरवशा गच्छेयुरेता. कथं
क्षौमाकारतया न चेत् परिणमेत् स्तावकीनं यशः ॥८९॥

चन्द्रश्चन्दनमिन्दुरिन्दुरमणं पीयूषमीशादयो
विश्वस्योपकृतावनेन महता ते तेऽवतारा धृताः ।
एतद् यत्र न विद्यते त्रिभुवने न स्थानमेवंविधं
जाने जङ्गमपारिजातसगुणं ब्रह्मेव पूर्णं यशः ॥९०॥

चन्द्राद्रूप्यकमण्डलोः समुदयद्गौरांशुगङ्गाजलै-
र्ज्योत्स्नाचन्दनचर्चनैर्विकसितैस्ताराप्रसूनैरपि ।
एतद्विष्णुपदं किमर्च्यति भवत्कीर्तिर्महायोगिनी
पूजापूर्ति विधायिलक्ष्मतुलसीदाम्ना कदाचिच्यति (?) ॥९१॥

गङ्गासागरसङ्गमे कृतशतस्नाना वदर्याश्रमे
स्थित्वाऽसौ परिधाय सद्गुणमयं श्वेतं दुकूलं पुनः ।
ब्राह्मं वैष्णवमैन्द्रमैश्वरमपि स्थानं स्पृशन्ती मुहुः
कीर्तिस्ते पतिदेवता युगशतं दीर्घायुराकाङ्क्षति ॥९२॥

एते चन्द्रचूडस्य ॥

अर्घायाम्बुधिरिन्दुमण्डलमपि श्रीचन्दनं तण्डुला-
स्तारा बिल्वदलं नभः सुरधुनी धूपः प्रदीपो रविः ।
खेटाः पञ्च फलानि किञ्च ककुभस्ताम्बूलमारात्रिकं
मेरुः श्रीजगतीपते तव यशोयोगेश्वरस्यार्चने ॥९३॥

केशवदीक्षितस्य ॥

इन्दुं निन्दति चन्दनं न सहते विद्वेष्टि पङ्केरुहं
हारं भारमवैति नैव कुरुते कर्पूरपूरे मनः ।
स्वर्गङ्गामवगाहते हिमगिरिं गाढं समालिङ्गते
यत्कीर्तिर्विरहातुरेव न मनागेकत्र विश्राम्यति ॥९४॥

कस्यापि ॥

मन्येऽरण्ये कुलगिरिगुहागह्वरे पर्यटन्ती
विद्धा दन्तैः(?) किमपि चरणे वासुदेवस्य कीर्तिः ।
इन्दौ कुन्दे कुमुदमुकुले चामरे चन्दने वा
दत्त्वा दत्त्वा मृदुनि पुरतः पादमेषा प्रयाति ॥६५॥

गणपतेः ॥

स्फूर्जद्ब्रह्माण्डशुक्तौ तव भुजजलदोद्दामदानौघवर्ष-
प्रोद्यत्त्वत्कीर्तिमुक्ताफलममलमहो वामकर्णे निधाय ।
अन्यं तेनैव तुल्यं धरणिधर-सुता प्रार्थयामास पत्यौ
तस्यालाभेन मन्ये प्रभुरपि जगतामर्धनारीश्वरोऽभूत् ॥६६॥

कस्यापि ॥

इति श्रीसुन्दरदेवविरचिते सूक्तिसुन्दरे कीर्तिवर्णनतरङ्गः ॥

॥ अथ प्रतापवर्णनम् ॥

कान्तारे जलवृक्षवैरिणि मुहुस्त्वद्वैरिवामभ्रुवो
बालैराकुललोचनैः प्रतिपदं रुद्धक्रमाश्चङ्क्रमे ।
पृथ्वीचण्डरुचे पटच्चरदशासंघट्टदीप्तप्रभं
सिञ्चन्त्यञ्जलिसञ्चिताश्रुभिरलं युष्मत्प्रतापानलम् ॥६७॥

काष्ठानुषङ्गात् परिवर्धमाने
जाग्रत्प्रतापज्वलने त्वदीये ।
श्रीकार्तवीर्य प्रसभं पतन्ति
प्रत्यर्थिपृथ्वीपतयः पतङ्गाः ॥६८॥

चन्द्रचूडस्यैतौ ॥

चक्रद्वन्द्वमुदञ्चति प्रतिदिशं मोदं विधत्तेतरां
पद्मानां ततिरेति घूकतिमिरे दुष्यादिलेन्यं (?) क्वचित् ।
वैकल्यं च मिनोति हंस उदये म्लायत्यरीणां व्रजो
राजन् कैरविणीवनैः समुदिते युष्मत्प्रतापे रवौ ॥६९॥

सुन्दरदेवस्य ॥

अये नृपतिमण्डलीमुकुटरत्न युष्मद्भुजा-
महोष्मतलिसंजुषा बत भवत्प्रतापार्चिषा ।
द्विषामतिभृशे यशः प्रकटपारदो ध्मापना-
दुदस्फुटत तारकाकपटतो विहायस्तटे ॥१००॥

लक्ष्मणस्य ॥

अध्यायोधनवेदि मार्गणकुशानास्तीर्य खड्गस्रुचा
हुत्वाऽरेः पललं चरुं हविरसृक्कृतन्मस्तकस्वरितकैः ।
संवेष्ट्याहवनीयमानसदमिध्योसौ प्रतापानलोऽ-
स्थापि प्रागुदकाञ्जलीकृतचतुःपाथोधिना श्रीमता ॥१०१॥

धरणीधरस्य ॥

लङ्काधामनि वीरभानुनृपतेः प्रेक्ष्य प्रतापोदयं
प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् ।
क्षुभ्यद्वाणि विधूतपाणि विगलन्मुक्तामणि प्रस्खलद्-
बाष्पश्रेणि विलोलवेणि दयितं कण्ठस्थले बिभ्रति ॥१०२॥

भानुकरस्य ॥

नार्यः कुङ्कुमशङ्कया निटिलगं प्रोञ्छयपासा (?) द्विषां
सान्ध्यं रागममुं विभाव्य गमनं यच्छन्ति(?) केलीगृहम् ।
मुग्धा दावधियोऽरयस्तव विभो यान्ति द्रुतं कानने
लाक्षाराग इति प्रकुप्यति धवे कान्ता प्रतापोदये ॥१०३॥
माञ्जिष्ठाम्बरविभ्रमं स्ववसने चोलो...चला
गुञ्जानां भ्रमतो जहाति शबरी मुक्ता द्विपानां वने ।
कैलासाद्रिधरेषु काञ्चनगिरिभ्रान्त्या रविर्म्लायते
देव त्वत्प्रखरप्रताप इह दैष्मासानला भूरभूत् ॥१०४॥

सुन्दरदेवस्यैतौ ॥

(क्रमशः)

# संस्कृत-नाटकानि

( पूर्वानुवृत्तिः )

[ निबन्धकः—वि. कृष्णस्वाम्ययङ्गार्यः ]

अत्र केचित्पाश्चात्याः संस्कृतभाषानभिज्ञाः प्राहुः 'नट' इत्येष धातुः 'नृत' इत्यस्य प्राकृतरूपमपभ्रंशः। नृतीनटधात्वोरुभयोरपि नृत्य (dance)

**नटधातुः** मेवार्थः। अत्र च भावाद्याश्रयतायां तदभावे वा न कश्चिद् व्यवहारे विशेषः। नृत्तं, नृत्यं, नाट्यं, नाटकमित्येते शब्दाः स्वरसतो नृत्यप्रतीतिमुपजनयन्ति, मूलभूतस्य धातोरभेदात्। अथापि लाक्षणिकानामनतिलंघनीयेन नियमेनार्थविपर्यासः पर्यवसन्नः। नृत्तं नाम ताललयाश्रयं रसभावस्पर्शहीनं गात्रविक्षेपमात्रात्मकमनुकरणम्। भावाभिनयस्त्वंगचालनप्रधानो नृत्यमिति व्यपदिश्यते। नाट्यमेव पुनरवस्थानुकरणात्मकं रसास्वादजनकं नाटकस्य प्रधानमङ्ग"मिति। तत्र प्राकृतशब्दस्य संस्कृतभाषायामुपादानमभूतपूर्वं प्रतिभाति। उभयोरपि धात्वोस्समानार्थकतेत्यप्युपेक्षणीयमेव। विषयभेदस्य लाक्षणिकैरवधारणमित्यप्यसमञ्जसम्। पाणिनिनैवार्थभेदतात्पर्येण णोपदेशयोर्णटधात्वोर्द्वयोः पाठात्। अन्यथाऽर्थभेदस्याधुनिककल्पितत्वस्वीकारे पाणिनेः पुनरुक्तिदोषपरिहारासम्भवात्। नहि सर्वदर्शी व्याकरणशास्त्रप्रवर्तको मुनिरनभिज्ञः पामर इव विस्मरणादिना दोषेण द्विवारमेकमेव धातुमभिन्नार्थकं पठितवानिति सम्भावनीयम्। चौरादिकस्यावस्कन्दनार्थकस्य पाठस्तु इंत्वादित्वसम्पादनेन कार्यान्तरविधानार्थः। अतोऽसकृत्समानार्थकस्य धातोः पाठः कृत इति न भ्रमितव्यम्। यदत्र णोपदेशपरिसंख्याने भाष्यकारः—"णोपदेशास्त्वनर्दनाटिनाथ्नाध्नन्दनक्कनृनृत" इति नाटिं पर्युदास्यत। 'नाटेर्दीर्घोपधस्य पर्युदासाद्ध्रस्वादिर्णोपदेश एवे'ति कौमुदी। णट-नृत्ताविति (३२०तमो धातुः) प्राथमिकतयै पठितोऽपि णोपदेश एव, यदुक्तं बालमनोरमायाम्—'अयमपि णोपदेशः,

नाटीति चुरादेरेव प्रतिषेधात्। प्रणटति" इति। उपसर्गादसमासेऽपीति णत्वसिद्धिर्णोपदेशफलतयोदाहृता। तथा स्वार्थभेदसत्त्वाल्लाक्षणिकानामाग्रहादर्थान्तरपरिकल्पनमिति पाश्चात्यानां कुसृष्टिर्नादरणीयेति स्पष्टमेतावता। वस्तुतस्तु विपरीतमत्र पदार्थनिरूपणं पाश्चात्यानामुक्तिभ्योऽसूयामभिव्यञ्जयति। पाणिनिर्हि णोपदेशावुभावप्यविशेषेण नृत्तावर्थे पपाठ। एकस्मान्नृतीधातोर्निष्पन्नो नृत्तिशब्दो हि नाट्यमभिदधानो नटनृतोरसमानार्थकताङ्गमयति। स्थलभेदेन नृत्तिशब्दस्यार्थभेदकल्पने मानाभावादुभावपि णोपदेशौ न भिन्नार्थकाविति समञ्जसमेतत्। उभयत्रापि नृत्तिशब्देनैवार्थनिर्देशात्। न चैवं पुनरुक्तिर्दोषः शक्य आपादयितुम्। घटादेर्नटतेर्मित्त्वात् तस्माण्णिचि नटयतीति रूपसिद्धेरेव फलत्वात् पुनरुक्तेः परिहारात्। भौवादिकस्य (३२०) घटादिव्यतिरिक्तस्य नटतेस्तु नाटयतीत्येव रूपमिति फलभेदः स्पष्टः। चौरादिकस्य नाटयतेस्तु प्रेषणारूपस्य प्रवर्तनापरपर्यायस्य णिजर्थस्याप्रतिभानात् णिजन्तभौवादिकनटधातुनैकार्थकत्वं न संभवति, चुरादिभ्यः स्वार्थे एव णिज्विधानात्। अतः पाणिनिनाऽर्थैक्यमभिसन्धाय रूपभेदोपपत्तये धातुद्वयं पठितम्, यस्यार्वाचीनैर्लाक्षणिकैर्भिन्नार्थकत्वमुपकल्पितमिति वचनमपि संगतमेव।

नाट्यशब्द-व्युत्पत्तिः

स्यादेतत्। नाट्यं नृत्यमित्यनयोः शब्दयोः कीदृशी व्युत्पत्तिः? चुरादेर्नटेर्यतीति नाट्यमिति रूपं परं निष्पद्यते, विवक्षितस्यार्थस्य तु प्रतिपत्तिरसम्भविनी। यत् प्रत्ययो हि कृत्याधिकारपठितत्वाद् भावकर्मणोरेव प्रवृत्तिमर्हति, तयोरेव कृत्य-क्त खलर्था इत्यनुशासनात्। नाटेर्वाक्यार्थाभिनयार्थकस्य धात्वर्थोपसंगृहीतकर्मतया शब्दायत इत्यादेरिवाकर्मकत्वाद्भावे यत्प्रत्ययो वक्तव्यः। अर्थविशेषनियामके तयोरित्यादिसूत्रे तच्छब्देन पूर्वोक्तौ भावकर्मणी परामृश्येते, तत्र च भावो नाम भावना उत्पादना क्रियेति यावदिति सिद्धान्तः। एव च भावसंज्ञादिवाच्यो लिङ्गसंख्याकारकान्वयानर्हत्साध्यावस्थापन्न इत्युच्यते। लकारवाच्यस्य भावस्य शब्दशक्तिस्वाभाव्येन लिङ्गाद्यन्वयासम्भवादेव तेन

भूयत इत्येकवचनमात्रम्, द्वित्वादिप्रतीतिप्रयोजकस्य द्विवचनादेरप्रसङ्गात्। न चैवमेकत्वस्याप्यनन्वयात्कथमेकवचनोपपत्तिरिति वाच्यम्, एकवचनमुत्सर्गतः करिष्यत इति सिद्धान्तात्। पाक इत्यादावपि शब्दशक्तिवैचित्र्यमहिम्नैव लिंगसंख्याकारकान्वययोग्यस्य सिद्धावस्थापन्नधात्वर्थस्य भावस्य प्रतीतिर्भवति। तत्र च कृदाच्यभावस्यैव लिंगाद्यन्वययोग्यता न लकारवाच्यस्य। एवं कृत्यप्रत्ययाभिधेयस्यापि भावस्य न सिद्धावस्थापन्नत्वमनुभवसिद्धम्, त्वयैधनीयं, त्वया भवितव्यमित्यादिरूपेणैव प्रयोगदर्शनात्। प्रकृते नाटयतेरकर्मकत्वाङ्गीकारे भावे प्रत्ययोऽनुपपन्न एव, साध्यावस्थापन्नस्य धात्वर्थस्य प्रतीतेरनभिमतत्वात्, 'अवस्थानुकृतिर्नाट्य'मिति विवरणे भावक्तिन्नन्तेन साकं समानार्थकत्वप्रदर्शनस्यासंगत्यापाताच्च। एधितव्यमेधनीयमित्यादीनां भावप्रतिपादकप्रत्ययान्तानां वचनान्तरे विभक्त्यन्तरे च प्रयोगस्यानुपलम्भात् साध्यावस्थापन्नो लिंगाद्यन्वयानर्हो भाव एव तव्यदादिभिरभिधीयत इति स्वीकारात्। तयोरेवेत्यत्र हि पूर्वपरामर्शकस्तच्छब्दस्तङ्विधायक-'भावकर्मणो'रिति सूत्रोपात्तं लकारवाच्यमसत्त्वरूपं भावमेवार्थाधिकारानुरोधादनुवर्तयति। न च 'लज्जां नाटयती'त्यादिप्रयोगानुसारेण नाटयतेस्सकर्मकत्वमेवेति वाच्यम्, केवलाभिनयार्थकतामनङ्गीकृत्य नाटयतेरसकर्मकत्वस्य दुरुपपादत्वात्। वाक्यार्थकर्मको विशिष्टाभिनयो हि नाटयतेः शक्योऽर्थः। वृत्त्यनुपस्थापितानामर्थानां शाब्दबुद्धिप्रवेशानधिकारात्। तथा च कर्मपदार्थबोधानन्तरं शान्ता काङ्क्षतया कर्मान्तरान्वयस्यासम्भवः। न च लघु पचतीत्यत्र लघुपदार्थस्य पाककृतावभेदान्वयः कथं संभवति, तत्राऽपि कर्माविशेषणेन लघुशब्देन द्वितीयैकवचनान्तेन कर्मत्वबोधस्याविर्भावादिति वाच्यम्, तत्र कर्मणो धात्वर्थेनानुपसंग्रहादभेदान्वयबोधे बाधकाभावात्। लज्जाभिन्नं वाक्यार्थमनुभवतीत्यर्थस्वीकारोऽपि भवतामनिष्ट एव। वाक्यार्थस्य रसात्मकत्वसिद्धान्तात् तत्र लज्जाभेदस्य कल्पयितुमशक्यत्वात्। लज्जाया रसत्वन्तु न कदाऽपि सम्भवति। भावानामपि क्वचिद्वाक्यार्थत्वं सम्भवत्येव; प्राधान्यतो वक्तृतात्पर्यगोचरस्यैव वाक्यार्थत्वपर्यवसानादिति तु न युक्ति-

सहम्; नाट्यनृत्ययोर्विषयविभागव्यवस्थानापत्तेः। नृत्यस्यापि भवदुक्त-रीत्या वाक्यार्थाभिनयत्वसम्भवात्। एवमभेदान्वयाङ्गीकारे 'महान्तं शब्दायते' महान्तं कलहायते इत्यादयोऽपि प्रयोगास्साधवः संपद्येरन्। विशेषणतयोपात्तस्य महत्पदार्थस्याभेदेन शब्दकलहयोरन्वये बाधकाभावात्। तस्मान्नाटयतेस्सकर्मकत्वमनुपपन्नमेव। अथ पूर्वप्रदर्शितानां लज्जां नाटयतीत्यादिप्रामाणिकप्रयोगाणां साधुत्वभंगभिया नाटयतेर्येनकेनाप्यकथंचित् सक-र्मकत्वमुपपादनीयमिति चेत्, नाटयतेरभिनयमात्रमर्थो वक्तव्यः। एते च प्रयोगाः नटनृत्योरेकार्थकत्वमासीदित्यस्मिन्वादेऽनुकूलाः। अभिनय-मात्रस्य नटधातुना प्रत्यायनमिति स्वीकारेण नृतीधातोरप्यभिनयार्थकत्व-दर्शनेन तयोः समानार्थकताया दुष्प्रत्याख्यानत्वात्। एवं नाटयतेर्निष्पन्नस्य नाट्यशब्दस्य रसादिविशेषणपरित्यागपूर्वकमभिनयमात्रबोधकत्वादाधुनिकानां "भरतनाट्य" मित्यादिव्यवहाराणामनुकरणार्थकानामप्युपपत्तिः सिध्यति। अथ नाटयतेः सकर्मकत्वप्रतिपादनेऽपि नाट्यशब्दस्य व्युत्पत्तिर्दोषग्रस्तैव। कर्मणि यतः कृत्यस्य प्रवृत्तावपि कर्मविशेषाकाङ्क्षाया जागरूकतया कर्म-वाचकपदान्तरस्य समभिव्याहारमन्तरेण शब्दबोधजननासामर्थ्यप्रसङ्गात्। अवस्थानुकृतिर्नाट्यमिति लक्षणस्यासंगतिलाद्यवस्थ्याच्च। एतेन हि लक्षणेन धात्वर्थभावो विशेष्यान्तरनिराकाङ्क्षो नाट्यपदाभिधेय इति स्फुटं प्रतीयते। भावकृदन्तानामनुकरणाभिनयादिशब्दानां नाट्यपदेन साकमेकार्थकत्वमप्येव-मनुपपन्नमेव स्यात्। अतो नाट्यशब्दो रूढ एव वाक्यार्थाभिनयवाचको-ऽभ्युपगन्तव्यः। अन्यथा नाटयतेरभिनयमात्रार्थकत्वात्तस्मान्निष्पन्नस्य नाट्यशब्दस्य प्रमाणान्तरानुग्रहादृते लक्षणकारैरपि वाक्यार्थाभिनयादि-विशेषार्थकतायाः प्रकल्पनस्याशक्यत्वात्। मूलभूतधातुद्वयस्यापि समानार्थ-कत्वेन नाट्यनृत्ययोर्विभिन्नविषयकत्वमप्यसमीचीनमापद्येतेति।

( क्रमशः )

मत्तीषु दासीषु च निर्विशङ्कः क्षितीश्वरो विस्मयपूर्णचित्तः ।
भटान् समाहूय जगाद शीघ्रम् भयङ्करो वः समुपैति दण्डः ॥७२॥
वृत्तिं वृथा वो नियतं ददामि नीरन्ध्रतन्द्रां भवतां यदीक्षे ।
किमन्यथा वीरसुरक्षितेऽस्मिन् फलेन चौराचरितं जितं स्यात् ॥७३॥
फणभृन्मृगेन्द्रस्य गृहं प्रविष्टश्चिक्षेप देहं दहने पतङ्गः ।
नागः श्रितः पक्षिपतेः कुलायं चौरो यदत्र प्रबभूव दम्रः ॥७४॥
अन्विष्यतां चौरपशुः स शीघ्रमानीयतां राजसकाशमेषः ।
इतोऽन्यथा चेदिह सान्वयानां प्राणान्तिको दण्डदमो भटानाम् ॥७५॥
अद्यापि दूरं न गतः स मूढः पुरे किलात्रैव वसत्यधीरः ।
मा नाम सूर्यास्तमनेन सार्द्धं प्राणाः समाप्तिं भवता भजन्ताम् ॥७६॥
वाचाऽथवा किं परयाऽत्र कृत्यं श्रुत्वा विजानीत वचो ममान्त्यम् ।
गृह्णामि सूर्यास्तमनात् पुरस्ताद् हारं महिष्या भवतामसून् वा ॥७७॥
श्रुत्वा महीपस्य वचःप्रपञ्चं क्रोधानलेनोग्रतरं भटास्ते ।
भीता यथाज्ञापयति क्षितीन्द्र इत्युक्तवन्तः परितः प्रजग्मुः ॥७८॥

अभ्यर्थितस्तदनु सम्भ्रमसम्परीतै-
　　भीत्याकुलैः परिजनैः कुपितो नरेन्द्रः ।
प्रातर्विधानकरणाय समं महिष्या
　　कामं सुविस्मितहृदा शयनं व्यमुञ्चत् ॥७९॥

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्यकृते सत्यानुभावे
महाकाव्ये चतुर्दशः सर्गः ।

—०—

## पञ्चदशः सर्गः

अथ भटा भयविक्रमनिर्जिताः पुरि दिशो विदिशश्च पृथक् श्रिताः ।
नृपरुषा बहुनाशविशङ्कया तृणममंसत जीवितमात्मनः ॥१॥

अहह ! दुःखमयं भुवि जीवनं निज-कलोदर-पूर्तिविधित्सया ।
धनिजनानुगतिं भजतां चिरं विविधहीनविधौ विनिमज्जताम् ॥२॥
न धनिका निजदासदशाविदः करुणया रचयन्ति मनः क्षमाम् ।
निजविधेरधिकेऽक्षणमन्वहं परिहरन्ति विषादिव भीरवः ॥३॥
धृतिभृतः सुतराञ्च रुजार्दितान् नियतकर्मणि योजयतां नृणाम् ।
धनवतामिह दीर्घविलोचनान्यपि भवन्ति लघूनि निजोन्नतये ॥४॥
स्वकृतदोषवशेन च विप्लुतं क्वचन कर्मणि शर्मविपर्ययात् ।
स्वगुणकीर्तिपरिच्युतिशङ्कया तमनुजीविजने प्रथयन्त्यमी ॥५॥
गुणशतान्यपि पूर्वकृतान्यहो सपदि लुम्पति दूषणलेशतः ।
तदनुजीविजनो दुरदृष्टभाक् प्रतिमुहूर्तमशेषभयाकुलः ॥६॥
अनुगतेषु विलोचनपातनं धनिगणो मनुते करुणाक्रमम् ।
क्वचन दुष्करकर्मणि योजनं त्रिदिवभोगमवैति वशंगतः ॥७॥
प्रभुकथापरिपालनसम्भ्रमाद्धि जनः कुरुते स्वजनस्मृतिम् ।
परिजनावनकृत्यपरायणः परिजनार्तिशतं समुपेक्षते ॥८॥
धनविनिष्क्रयणेन धनी जनो वपुरसृक् परिकर्षति भूरिशः ।
विनिमयैरसमेन च वस्तुना न सुगमा प्रभुतोषपरम्परा ॥९॥
न वसनं शयनं न च चाऽशनं निजमनोरथवद् वरितुं क्षमः ।
प्रभुहिताय विधिः किल निर्ममे जगति दासजनांश्च सुखाप्तये ॥१०॥
सरणिसङ्गतकण्टकसंस्तरः कुसुमकोमल एव हि मन्यते ।
प्रभुनिदेशवशीकृतचेतसा किमु सुदुष्करमत्र धरातले ॥११॥
प्रणिदधाति च जीवनसंशये पदमधःकृतदुःखकथास्मृति ।
अतिविचित्रमहद्विडम्बितं जगति दासजनस्य जयत्यहो ! ॥१२॥
प्रभुजनो यदि निन्दति सद्गुणं तदिह दोषपदे स निवेश्यते ।
यमिह दोषमुदीरयति प्रियं गुणतया स दृढं परिषेव्यते ॥१३॥
क्षितितले गुणदोषविचारणे प्रभुमतिः प्रभुतामनुसेवते ।
निजमतिर्विपरीतमतानुगा सपदि मज्जति तन्मतसागरे ॥१४॥

स्मितलवं प्रभुवक्त्रगतं सितं यदि जनः परिपश्यति कर्मणा ।
तदिह पूर्वभवेषु कृतं शुभं सकलकर्म फलेन विजृम्भितम् ॥१५॥
परवशस्य परार्थपरा कृतिर्विजयते भुवि चित्रतरक्रमा ।
धनिगणैर्द्रविणेन यदर्जितं वपुरसृक्प्रचयेन तदर्ज्यते ॥१६॥
प्रभुनिदिष्टविधौ खलु मज्जतां बत निशाप्यनिशं दिवसायते ।
दिनमपि प्रतिविन्दति रात्रितां परवशस्य न कालविचारणा ॥१७॥
अनुगतस्य नृपात् प्रथमं भयं तदनु तत्प्रणयेन यशस्विनः ।
सचिवतामवतोऽपि ततः परं बहुभयाकुलितं बत जीवितम् ॥१८॥
यदि न कर्मकृतत्वरया क्वचिन्न खलु वक्ति न वा मृदु लोकते ।
तदहितं क्रियदेव स कल्पयंस्त्रिभुवनं तिमिरावृतमीक्षते ॥१९॥
अरिषु तस्य सपत्नतया स्थितिः प्रणयिषु प्रणयेन हितोत्तरा ।
क्वचिदतः स्वजनेऽपि विरोधितां समनुगच्छति दासजनः क्षितौ ॥२०॥
इति तथापरदासजनस्थितिं मनसि दीप्ततरामनुचिन्तयन् ।
भटगणः समयुङ्क्त पुरान्तरे सपदि तस्करसंग्रहसाधने ॥२१॥
विपणिषु प्रथमं पदमादधे प्रतिजनं विचिकाय ससंशयम् ।
मणिसुवर्णवणिग्जनकेतने विचयनं विदधे च विशेषतः ॥२२॥
क्वचन नो हृतहारविनिश्चये भटचयः सभयः समुपागमत् ।
मनसि संशयितस्त्वरयान्वितस्तदनु लक्षपतेर्भवनं ययौ ॥२३॥
दिनमुखे वणिजां पतिरुत्थितः शयनकादथ लक्षपतिस्ततः ।
मणिमयोज्ज्वलहारलतां प्रगे शयनपृष्ठगतां समवैक्षत ॥२४॥
रुचिमयी मणिहारलता नवा नहि मया पुरतः परिलोकिता ।
कुत इयं शयने मम सङ्गता किमिति सुप्तिगतः प्रविलोकये ॥२५॥
किमथ मायिकमेतदवेक्ष्यते नहि निरूपयितुं क्षमते मनः ।
विविधसंशयसङ्कुलचेतसा दिनमुखे सुतरामहितं चितम् ॥२६॥
भवतु शङ्खपतिं स्वसुतापतिं समुपमन्त्र्य करोमि सुनिश्चयम् ।
इति विभाव्य स सम्भ्रमसम्भृतो लघु जुहाव तमान्तरशान्तये ॥२७॥

तदनु शङ्खपतिः श्वशुरान्तिकं समुपसृत्य सुनिश्चितवार्त्तिकः ।
महति संशयवारिनिधौ चिरं नहि मनो ब्रुडितं स्मगमारयत ॥२८॥
श्वशुरमाह ततो दुहितुः पतिर्न हितमत्र किमप्यवलोकये ।
कति पुरे रिपवो विततां हि नः किमु तदाचरितं न भवेदिदम् ॥२९॥
नृपविभूषणमेतदसंशयं न खलु सोऽपि पुरेव सुहृच्च नः ।
तदचिरादिदमस्तु हिताय नः सविधकूपगतं हितघस्मरम् ॥३०॥
इति विनिर्णयमाप्नवतोस्तयोः सविधकूपतटं प्रति गच्छतोः ।
भटगणः समुपेत्य गृहान्तिकं परुषमेव जुहाव वणिग्वरम् ।३१॥
विफलयन्नतया परुषोक्तिभिर्भटगणस्य च सम्भ्रमदुर्बलौ ।
कथमपि प्रतिजग्मतुरन्तिकं कतिशताहितभावनयाकुलौ ॥३२॥
सहैव हारेण समेत्य तद्द्वयं भटा बभूवुः सहसा मदोत्कटाः ।
आच्छिद्य हारं तरसा करस्थितं निकारलक्षं व्यदधुर्वणिग्युगे ॥३३॥
रे भण्ड ! मार्त्तण्डसमानतेजसः पराभवन्नुममहो महीपतेः ।
पुरेऽत्र पौरैस्त्वमलक्षितः पुरा चौरस्य वृत्तानि सदाऽनुवर्तसे ॥३४॥
प्रच्छादितो भस्मचयैरुपर्बुधः प्रभञ्जनेनाद्य पुरः प्रकाशितः ।
कालं कियन्तं तृणराजिगोपितो द्रुमाङ्कुरस्तिष्ठति लोचनाद् बहिः ॥३५॥
तदद्य ते वृत्त्यनुरूपशासनं जामातृयुक्तस्य नृपो विधास्यति ।
अलं विलम्बेन वृथात्र शृङ्खलं करद्वये वां समलङ्करोत्वलम् ॥३६॥
इत्युक्तवद्भिः क्षितिपालपूरुषैर्जामातृयुक्तो निगडेन यन्त्रितः ।
स दोषनिर्मुक्तिकृते यदुक्तवान् तत्र श्रुतं तैर्विफलत्वमावहत् ॥३७॥
सलोप्त्रकस्तस्कर एष संयतः सुरक्षितं नः सुहृदाञ्च जीवितम् ।
इत्थं समुच्चैः पथि ते मदान्वितास्ताभ्यां नदन्तस्त्वरया प्रतस्थिरे ॥३८॥
पदे पदे तौ यमकिङ्करोपमा भटाः समूचुर्वदतं स्वदूषणम् ।
राज्ञः समीपे न तिरोहितं भवेत् प्रच्छादनं किं कुरुथः फलच्युतम् ॥३९॥
मृषाभियोगेन वयं सुसंयताः परैः कृतं किं स्वकृतं निगद्यताम् ।
निर्दूषणानामभिधेयमत्र किं कुरुध्वमस्मिन्नुचितं यदिच्छथ ॥४०॥

अधस्तन-कवीनां कालिदासादीनामुपरि

# कविमुनेर्भासस्य प्रभावः

[ निबन्धकः—श्रीदुर्गादास-गोस्वामी काव्यतीर्थः बी. ए. ]

( पूर्वानुवृत्तः )

महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः—बालचरित

एकातपत्रं जगतः प्रभुत्वम्—रघुवंशे ।

हृदयेनेह तत्राङ्कैर्द्विधाभूतेव गच्छति ।

यथा नभसि तोये च चन्द्रलेखा द्विधाकृता ॥—बालचरिते ।

गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः—शाकुन्तले ।

अनतिक्रमनीया विष्णोराज्ञा—बालचरिते ।

आज्ञा गुरूणां ह्यविचारणीया—रघुवंशे ।

आहूयमानोऽकरुणेन राज्ञा, गच्छाम्यहं भृत्य इवास्वतन्त्रः—बालचरिते ।

न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः—मेघदूते ।

एष ( जोर ?) निष्क्रम्य परिघट्टितवल्मीकमूलो भुजङ्गैकवर्णैर्नीलोत्पलदामभिः शृङ्खलैरिव वृषभः शोभते। अन्योऽप्येष वृषभ उच्छ्रित-प्रसारितपुच्छो निकुञ्चितजानुः शशीव धवलाङ्गोऽग्रविषाणाभ्यां महीमुत्क्षिपन्निव शोभते—बालचरिते ।

शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः—मेघदूते ।

धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः ।

बध्नाति मे बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥—रघुवंशे ।

"शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम्"—मेघदूते ।

हनुमान्—एनमशोकपादपमारुह्य कोटरान्तरितो भूत्वा इदं वृत्तान्तं ज्ञास्यामि । ( कोटरादवरुह्य ) जयत्वविधवा—अभिषेकनाटके। अनेन वृत्तान्तेन साकं वृक्षान्तरितस्य दुष्मन्तस्य गूढं शकुन्तलादिचेष्टानिरूपण

संवदति। अपि च, मेघदूते "भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं" मित्यादिप्रकारेण स्वकान्तामंत्रणार्थं यक्षस्तावन्मेघमनुरुरोध।

भूयसा सम्भाव्यते यत् कालिदासकाव्यानां व्याख्याता पण्डितप्रकाण्डः श्रीमान् मल्लिनाथो भासरूपकैः सार्द्धं परिचितो नासीत्। तथापि, मेघदूत-व्याख्यानं प्रक्रममाणेनानेन "सीतां प्रति रामस्य हनूमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृतवानित्याहुः"—इत्यादिवचनगूचे। अपि च, मेघसन्देश एव स्थाने स्थाने सादृश्य मतस्य समर्थकानि वाक्यानिकुरम्बा-ण्युपलभ्यन्ते। तेषां मध्ये पुनरिह कानिचिदुध्रियन्ते। तद्यथा—

यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु।—मेघदूते।
"इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा"—मेघदूते।
"आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु"—मेघदूते।

यतोऽधुना भासकवेः प्रतिमानाटिकामधिगताः स्मो वयमतः प्रायेण संशयानामविषये स्थिता यदमरगीतिकाव्यं मेघदूतं रचयितुर्महाकवेः कालिदासस्य मननजलधेरगुरूदरमधिशयान एवासीत् कविमुनिभासकृतायाः प्रतिमानाटिकायाः प्रभावः। वस्तुतस्तु यक्षकान्ताया यादृश्यः खलु विरहदशाः परमेण पाटवेनोपनिबद्धाः कालिदासेन तावत्यः सर्वा अपि स्मारयन्ति नः श्रीरामदयिताया अशोकवनिकाभ्यन्तरस्थायाः कलामात्रावशित-शशाङ्कलेखाया इव सीतायाः करुणा मर्मस्पृशश्चावस्थाः। अपि च, विरहिणोऽविमारकस्य दशा अपि स्मारयन्ति नः श्रीभ्रष्टस्य यक्षस्यावस्थाः। एतत्तु उपरिष्टात् स्फुटीभविष्यति।

यस्यां न प्रियमण्डनापि महिषी देवस्य मन्दोदरी
स्नेहाल्लुम्पति पल्लवान्न च पुनर्वीजन्ति यस्यां भयात्।
वीजन्तो मलयानिला अपि करैरास्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम्॥ अभिषेकनाटके।

भूयसा सदृशोऽस्य श्लोकस्तावत् शाकुन्तले प्रत्यक्षीक्रियते—

यथा,—पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

भासकृतेरभिषेकनाटकस्य षष्ठेऽङ्के विद्याधरत्रयस्य सकाशादेको युद्ध-वृत्तान्तोऽवगम्यते । भवभूतिप्रणीतस्योत्तररामचरितस्य पञ्चमाङ्केऽपि तावद् वयमस्यानुरूपं वर्णनं विद्याधरमिथुनेन प्रदत्तमुपलभामहे । अपिच पश्य,

विज्ञाय देव्याः शोकञ्च श्रुत्वा चार्यस्य शासनम् ।
धर्म-स्नेहान्तरे न्यस्ता बुद्धिर्दोलायते मम ॥—अभिषेकनाटके

इत्येकपक्षाश्रयविक्लवत्वादासीत् स दोलाचलचित्तवृत्तिः । —रघुवंशे

काष्ठादग्निर्जायते मथ्यमानाद् भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां मार्गारब्धाः सर्वयत्नाः फलन्ति ॥

—अभिषेकनाटके ।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते जन्तुः ॥—शाकुन्तले ।

काष्ठं हि मथ्नन् लभते हुताशं भूमिं खनन् विन्दति चापि तोयम् ।
निर्बन्धिनः किञ्चन नास्त्यसाध्यं न्यायेन युक्तञ्च कृतञ्च सर्वम् ॥

—बुद्धचरिते, १३ सर्ग ।

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भूद् नरकञ्च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत ॥

—प्रतिज्ञायौगन्धरायणे ।

प्रागुक्तः श्लोकः कौटिलीयेऽर्थशास्त्रेऽपि दृश्यते ।

को नु खल्वेष सहसा प्रासादाग्राद् विनिःसृतः ।
श्येनपक्षाभिसृष्टाना कुररीणामिव ध्वनिः ॥—प्रतिज्ञानाटके ।

तथेति तस्याः परिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते ।

सा मुक्तकण्ठा व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ॥

—रघुवंशे, १४श सर्ग ।

मूलरामायणकृतादिकविना महर्षिवाल्मीकिना तावद्भरतो लक्ष्मणस्य ज्येष्ठरूपेणोपवर्णितः। परमस्माकं भासकविना स्वरचितायां प्रतिमानाटिकायां भरतलक्ष्मणयोर्यः खलु सम्बन्धो वाल्मीकिना प्रदर्शितः, स प्रतीपीकृतः। दृश्यते च तत्र भरतेन वन्द्यमानो लक्ष्मणस्तेन पुनरालिङ्ग्यमानश्चोत्थाप्यमानश्च भरतः। महाकविकालिदासो भासकवेः प्रबन्धपाठाद्वा भृशमभिनयदर्शनाद्वा नूनमेतादृक् प्रभावितोऽभवत्, यत् सोऽप्यस्मिन् मोहावर्ते पतितोऽभवत् रघुवंशे लक्ष्मणाद् भरतस्य कानिष्ठ्यं प्रदर्शितञ्च। अनुरूपस्थलोद्धृत्या वयन्तावद् विषयमिमं स्फुटीकर्तुं यथासाध्यं यतिष्यामहे। पश्यन्तु भवन्तः—

भरतः। अनुगृहीतोऽस्मि। आर्य! अभिवादये।

लक्ष्मणः। एह्येहि वत्स! दीर्घायुर्भव। परिष्वजस्व गाढम् (आलिङ्गते)।

अन्यच्च, सुमन्त्रः। अये कुमारो लक्ष्मणः।

भरतः। एवं गुरुरयम्। आर्य, अभिवादये। —प्रतिमायां।

दुर्जातबन्धुरयमृक्षहरीश्वरो मे, पौलस्त्य एष समरेषु पुरः प्रहर्ता।

इत्यादृतेन कथितौ रघुनन्दनेन, व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥

सौमित्रिणा तदनु संससृजे स चैनमुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग।

रूढेन्द्रजित्प्रहरणव्रणकर्कशेन, क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥

रघुवंशे, १४श-सर्ग ।

( क्रमशः )

(इति सागसामिवात्मानं मन्यमानामनुनयन्)

प्रिये ! इदमदूरे आश्रमपदं महर्षेः। (इत्युभौ ससम्भ्रममवलोकयतः।)

वैखानसैस्तत इतः परिसेव्यमान-
मध्यास्य गीतनिगमध्वनिपूतगेहम्।
नानामृगैर्विलसिताङ्गनमङ्गनाभि-
रामूलतो नियतसेवितशाखिसंघम् ॥८३॥

होमाज्यसौरभसुवासितदिग्विभागं
नीवारपक्कफलमण्डितपर्णशालम्।
धूमातिपाटलशरीरमहीधराढ्यं
... ... ॥८४॥

ब्रह्मानुधारणसमाधिनिमीलिताक्ष-
योगीन्द्रदेहपवनैः परिशुद्धमार्गम्।
मौनव्रतैर्मुनिभिरङ्कितवेशकृत्यं
पुण्यालयं नयनलक्ष्यमकारि ताभ्याम् ॥८५॥

समः। (ससम्भ्रमम्) प्रिये। अत्र हुताग्निरिव प्रज्वलन् स्वकिरण-प्रकरसुखीकृत (?) दिनमणिकरनिकरः अन्तेवासिभिरभितः परिसेविताङ्घ्रियुगलः प्रथिततीव्रकोपो महर्षिरष्टावक्रः प्रतिवसति। तदत्र सावहितया भवितव्यम्। (इत्युपसृत्य महर्षिपुरतः स्थित्वा विनयावनतकन्धरः बद्धाञ्जलिः।)

भगवन्! अनवरतब्रह्मास्वादनपरितुन्दिलविषयरस निखिलनिगम-मर्मज्ञानमिहिर तिरस्कृताज्ञानतिमिर कारुण्यनिकुरम्बकृतार्थीकृतजगन्मण्डल-एष वासुदेवतनयः समः प्रणमति इयञ्च दमननृपतितनया मयोपनीता रेवा-प्रणमति।

मुनिः। (सादरमवलोक्य—) वत्स! जानामि। (इति परिष्वज्य मूर्द्धनिमाघ्राय रेवां प्रति)॥

देवकीव हृषीकेशं पार्वतीव षडाननम् ।
इयं दमनभूपालतनया लभतां सुतम् ॥८६॥

सर्म प्रति—

कालिन्दीगर्भसम्भूते गोविन्दतनये त्वयि ।
त्रिलोकीनीत चित्तोऽपि नैवशास्यं(?) न ते क्वचित ॥८७॥

समः। भगवतश्चरणनलिनावलोकनवन्दनादेव सर्वमुपपन्नम् ।

अष्टा। वत्र्मश्रमम्लानमवलोकयामि मुखं, तदत्र क्षणमुपविश्य श्रम मपनय ।

समः। यथाज्ञापयति भगवानित्युपविशति। रेवापि तापसीभिः पर्णशालान्तरं प्रवेशिता ।

तां राजकन्यां स्मरलोभनीय-
कान्तिं निरीक्ष्याशु तपस्विवध्वः ।
तद्भूषणैरागमविस्मयात्ता
दयार्द्रचित्ता· परितः परीयुः ॥८८॥

कुशासनं कापि पयांसि कापि
फलं सुपक्वं मधुरञ्च कापि ।
नीवारमुष्टीरुपहृत्य कापि
भूपालजातिथ्यमहो चकार ॥८९॥

काचित्तरूणा नवपल्लवौघैः
काचित प्रसूनैर्विविधैर्मनोज्ञैः ।
काचिच्च वाग्भिर्मधुराभिरस्याः
स्त्रीयानुरूपामकरोत सपर्याम् ॥९०॥

तद्भूषणं पाणितलेन कापि
स्पृष्ट्वाऽनभिज्ञा बत नामधेये ।
नतानना क्षौमनिबद्धदेहां
पुनः पुनः पृच्छति नाम तेषाम् ॥९१॥

तासां प्रियालापदयार्द्रभाव-
व्यग्रत्वनम्रत्वविलोकनेन ।
तत्तत्सखीनां विरहाभिवृद्धिं
रेवामनः पल्लवितश्चकार ॥६२॥
बद्धाञ्जलिर्भूपसुता मुनीनां
वधूरवादीत् क्षितिलग्नमूर्द्धा ।
मातुः सखीनामपि विप्रलम्भो
विस्मारितो मे भवतीभिरार्याः ॥६३॥
विहाय भोगानवधीर्य कामं
विमर्श्य देहानवलोक्य धर्मम् ।
तपांसि घोराणि सुदुर्द्धराणि
वनेषु यूयं चरथामलानि ॥६४॥
युष्माकमेतैर्विमलैस्तपोभि-
स्तातः क्षितिं रक्षति निर्विशङ्कः ।
यच्छन्ति भूयांसि पयांसि गावो
वर्षन्ति मेघाश्च फलन्ति वृक्षाः ॥६५॥
कृपालुतापूरितमानसानां
पदेषु याचे वरमेकमेव ।
अमुष्य दासीगणनावसाने
भवेयमेतत्करपद्मलेख्या ॥६६॥
एतन्निशम्य गदितं क्षितिपालपुत्री-
मङ्के निधाय वदनं परिचुम्ब्य तस्याः ।
आश्लिष्य निर्भरमिमां स्रवदस्रवस्ताः
कन्याः सुतामिव चिरादुपसृजन दयार्द्राः ॥६७॥
धीरः शमोऽपि मुनिपादगथाभिवाश

उत्कण्ठया पितुरगोचरतः प्रवेशा
त्तापसप्रणयतः स्थगितश्चिराय ॥९८॥
संस्मृत्य तापसकथां स विचिन्त्य तत्त-
द्भूमीरुहाङ्कुरदलेषु फलेषु शोभाम् ।
एणीदृगाननविलोकनबद्धनेत्र
कुष्टाग्रयं दयितया सममाकरोद ॥९९॥
अन्योन्यदेहलतिकामवलम्बमानौ
उत्कौतुकानि च परस्परमालपन्तौ ।
अव्यक्तवाग्गदगिरौ मिलितार्द्धनेत्रौ
निद्रायिताविव ययोत्थसमीरणेन ॥१००॥
दृष्ट्वा मुदा सहचरीषु निवेदयन्तौ
वाग्भङ्गिभिस्तदधिकं परिवर्धयन्तौ ।
तत्तोषदर्शितसखीमनुतापयन्तौ
तां वीक्ष्य शोणनयनां निभृतं हसन्तौ ॥१०१॥
नानाविचित्रधरणीतलन्यस्तनेत्रौ
तत्सौभगातिशयकर्षितचित्तवृत्ती ।
यद्यद् विलोकयितुमत्र समीहमानौ
तत्तत् क्षणेन समतीत्य परं विशन्तौ ॥१०२॥
दात्यूह-भृङ्ग-कलकण्ठ-शिखण्डि-हंस
पारावतादिविहगध्वनिदत्तकर्णौ ।
भूपालमन्दिरगुणाकरकाननानि
संवीक्ष्य वीक्ष्य रथवेगकृतानुतापौ ॥१०३॥
वेलावलम्बिलवलीपरिधौतमूल
हिन्ताल-ताल-बकुलाम्र-कदम्बशोभाम् ।
तौ दम्पती प्रणयहर्षसुपूर्णकामौ
तीरं विलोकयत आशु पुरः पयोधेः ॥१०४॥ (कुलकम्)

पाथोनिधि प्रलयवारिदतुल्यगर्जे
गुद्दामवायुपरिवर्धितवीचिरागम् ।
नृत्यन्महामकरनक्रभुजङ्गमौघ
मालोक्य विस्मयरसो भजतश्चिर तौ ॥१ ५॥
विद्दन्तिलालिमकरगुरुकरोत्थधारा
धाराभिरुच्छ्रितवपु पुलकाञ्चितौ तौ ।
मुक्ताफलानि नवविद्रुमञ्जीविशङ्का
नालोक्य धर्त्तुमनसौ भवतस्तदा तौ ॥१०६॥
देवः समोऽपि सह योधवरैः पयोभि
स्तीर्य तं रणजवात् क्षणत सुवेर ।
द्वारावतीनगरसीमनि संप्रविष्टो
भास्वद्विधू इव चिरादुदयाद्रिमूर्ध्नि ॥१०७॥
पाञ्चजन्यनिनदेन बोधिता नम्रनयना पुरौका ।
शङ्खदुन्दुभिमृदङ्गवादनैर्नृत्यगीतरविकाश्च दूमदा ॥१०८॥
आगतं पुरि निशम्य माधवं बालवृद्धवनिता अपि तत्र(?) ।
रेवया सह समागतं समं द्रष्टुमुत्तरमुखा नगरा ययु ॥१०९॥
लोलकुण्डलकपाः श्लथचेला भाराकम्पि जठरास्ववमाणा ।
अमयानरसिकाः पुरलोका कम्पयन्ति धरणीं पदागे ॥११०॥ [illegible]
चन्द्रसलिलसेचितभूमिसुन्दमवलानिवहाराकृतमार्गाम् ।
हेमकुम्भपरिशोभितरम्भा-तोरणध्वजविराजितशालाम् ॥१११॥
हेमचम्पकसुमौक्तिकगुच्छविद्रुमावलिविभूषितवीथिम् ।
गीतवाद्यबहुलोत्सवयुक्तां भूरिभूरिगणिकाङ्गननृत्याम् ॥११२॥
हेमकुम्भविलसद्भवनौघां धूपकम्पितनभ स्थलशोभाम् ।
राजहंसगतिकूजितयुक्तां वाजिकुञ्जरपदातिमनोज्ञाम् ॥११३॥
कौतुकादथ रथादवरुह्य पाणिना धृतवेणुकरपद्मा ।
द्वारकां कुलकुलीमिरावृतां ह्यमरेन्द्रतनय, स विवेश ॥११४॥

तां विलोक्य भुवनैकदुर्लभां मालवेन्द्रतनयां पुरौकसः ।
कण्ठकण्ठविनिबद्धपाणयस्ते परस्परमिदं बभाषिरे ॥११५॥
अश्विनीसुतसमाकृतिः समो भूपजा जगति दुर्लभाकृतिः ।
योग्ययोग्यघटना विधेरियं कं जनं त्रिभुवने न मोदयेत् ॥११६॥
ईदृशं पतिमवाप दुर्लभं पूर्वजन्मसुकृतेन भूपजा ।
अल्पपुण्यविभवेन मानवो लब्धुमर्हति न कल्पपादपम् ॥११७॥
ईदृशीं प्रियतमामुपयेमे पार्वतीचरणवन्दनादयम् ।
एतया निखिलनाथनन्दनो भूरिकालमवनीषु मोदताम् ॥११८॥
कान्तियौवनभरेण न दृष्टा न श्रुता प्रतिकृतिः क्वचिदस्याः ।
रूपमेतदवलोक्य मनोज्ञमूर्वशीप्रभृतयोऽपि सलज्जाः ॥११९॥
यत्र यत्र चरणं क्षिपतीयं तत्र तत्र धरणिः रासरोजा
यत्र यत्र निदधाति च दृष्टिं तत्र नीलनलिनस्रगुदीता ॥१२०॥
कोमलेन चरणेन चलन्ती मन्दमन्दमबला दयितेन ।
अम्बरस्फुरितदेहशोभना रोहिणीव विधुना विराजते ॥१२१॥
द्वारका निखिलरत्नपूरिताप्येतयैव पुनरुज्ज्वलीकृता ।
कैरवादिसुकुमारनिकीर्णा वापिका सुरुचिरेव नलिन्या ॥१२२॥
रूपयौवनभरैः स्मरलोभि-कोटिकोटिमहिलागणपूजा ।
अकृताऽजनि परन्त्वनयैव मालया मुररिपोरिव देहः ॥१२३॥
प्रेमकण्टकितसादरकान्त-पीनपाणिधृतकोमलपाणिः ।
राजते सरसि सद्मनि रेवा हस्तिहस्तकलिता नलिनीव ॥१२४॥ (कुलकम्)

अथ भ्रमरपंक्तिभिश्चलितनेत्रनीलोत्पला
नाना(?)तिलकोल्लसद्घृमणिशोभिवक्त्राम्बुजा ।
विलोलकुटिलालकस्फुरितमौक्तिकैराचिता
चलत्कनककुण्डलद्युतिविकाशिगण्डस्थला ॥१२५॥
उरःस्थलघनोल्लसद्विविधहारभारानता
वरस्मितसुधारसस्नपितपक्वबिम्बाधरा ।

पटान्तरविलोकनन्यन(?)चातुरीपण्डिता
नितम्बनवकिङ्किणीक्कणितमाधुरीमण्डिता ॥१२६॥
चलच्चरणनूपुरक्कणितनिन्दितपुष्पन्भगा
पयोधरभरश्रमस्खलितधर्मबिन्दूत्तन्करा ।
पुरोदरविनिर्गतत्वरितपादथानाकुला
प्रभूतकुलकामिनीकलितमण्डलीर्वालता ॥१२७॥
प्रियप्रणयपानिनी(?) तदनुगामिनी कामिनी
मुनेरपि विमोहिनी दमनभूपतेर्नन्दिनी ।
ससम्भ्रमपदद्वयालसगतिर्विनम्रानना
सखीगणसमावृता विशति मादरं मन्दिरम् ॥१२८॥
अनेकगणिकागणा विविधगीतनृत्योत्सता
पतन्ति कुसुमान्यहो गगनचारिणां पाणितः ।
नदन्ति पटहानकाः क्वचन भूरिभेरीरवा-
स्ततो हुलहुलीरवैर्विविधकौतुका द्वारका ॥१२९॥
सुतं वधूपाणिनिबद्धपाणिं चिरेण दूरादवलोक्य देवी ।
प्रमोदनेत्रस्रवदश्रुबिन्दु स्तुतस्तनं गद्गदवाग् बभूव ॥१३०॥
कुलाङ्गनाभिर्वरणादिकानि समापयामास कुलोचितानि ।
रत्नैरनेकैर्जननी सुतस्य निर्मञ्छयामास मुखारविन्दम् ॥१३१॥
अङ्के निधाय तनयं जननी चिरेण
सम्मार्ज्य पाणिकमलेन मुखेन्दुमस्य ।
आघ्राय मूर्ध्नि विनिभाल्य तदङ्गशोभा-
मानन्दजं नयनवारि विमुञ्चति स्म ॥१३२॥
उन्नमय्य चिबुके मुखे तयोरेकदैव निपुणं निभाल्य सा ।
रुक्मिणीसुतवधूभवगर्वं सर्वमेव कलयत्यथ चित्ते ॥१३३॥
तावङ्के विनिधाय वीक्ष्य वदनं सम्मार्ज्य देहौ करे
आमोदं यमवाप निर्भरमियं देवी प्रलिन्दोद्भवा ।

न त्रैलोक्यमहाधिपत्यविभवे गीते भगा दुर्लभ
नो पीयूषरसो नवाहतपदे नान्यत्र कुत्रापि रः ॥१२४॥
भूलोके जगदीशकोमलपदद्वन्द्वारविन्दाङ्किते
कुब्जा ब्रह्मपदं जगाम कुटिलः कंसोऽपि वैशाननः।
वैकुण्ठाधिकनिर्वृतिं निरुपमां गोप्योऽपि संलेभिरे
तस्यापत्यकलत्रसौख्यविभवः कैर्नित्वपैर्वर्ण्यते ॥१२५॥
ईषद्दृष्टिरुतारुपवाक्यविभवः स्तोकायुरज्ञो जनो
विश्वालोकककवागधीश्वरसदानन्दाखिलज्ञानिनः।
यन्मौढ्याद् गुणवर्णनाय ररानां व्यामोहयत्यादरा-
च्चापल्यं तदिदं दयालुहृदयैः क्षन्तव्यमार्य्ये(?)र्बुधैः ॥१२६॥
चित्ते कामवशंवदे मृगदृशां वक्त्रेन्दुलुब्धेऽक्षिणि
कर्णे च प्रतिवाचिकप्रणयिनि स्पर्शादरिण्यां त्वचि।
पाणौ निन्दितसेविनि स्तुतिकथामुग्धे रसज्ञादले
धावत्स्वेषु बतेन्द्रियेषु महिमा केन प्रभोर्वर्ण्यते ॥१२७॥
कविवरकृतकाव्येष्वत्र चित्रेषु सत्सु
तदपि सरलमुख्यैरेतदालोचनीयम्।
सति हि कनकहारे रत्नमुक्ताविचित्रे
लघुरपि हृदि काचो न्यस्यते कामिनीभिः ॥१२८॥
शाके वेद-मुनीषु-चन्द्र-गणिते पक्षे वलक्षे मधौ
श्रीमद्वन्द्यपदारविन्दयुगलं श्रीतर्कवागीश्वरम्।
नत्वा श्रीद्विजकृष्णनाथवटुना काव्यं मया कल्पितं
दोषावेशमपास्य साधुहृदयैरास्वाद्यमेतच्चिरम् ॥१२९॥
इत्यानन्दलतिकायां पञ्चमकुसुमम् ॥
॥ समाप्तोऽयं ग्रन्थः ॥

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| July, 1942 | १८६४-शकीये आषाढे<br>२५श-वर्षस्य ३य-संख्या | Vol. XXV No. 3 |


## गद्यपद्ययोः कस्य हृद्यता

[ निबन्धकः—पण्डितभूषण-कृष्णमूर्तिशास्त्री ]

अयि लब्धवर्णवरेण्याः ! गीर्वाण्या वाण्याः प्रचारणे धरण्यां सरणीर्बह्वीस्समाद्रियमाणाः किञ्चिदिव कर्णं कुर्वाणा मामकीं वाणीं समनुगृह्णीतेति प्रणतिसहस्रपुरस्सरमभ्यर्थये । तत्र तत्र पत्रिकासु विपश्चिद्भिरुदञ्चत्कौतुकं विशिष्य गद्यस्यैव पारम्यमभिदधद्भिराशेमहे प्रोत्साहिताः कालानुगुणं लेखकमहाशया इति । पत्रिकाप्रपञ्चोऽपि प्रचारणे सुरवाचामालोच्य नक्तंदिवमुत्पश्यति 'लघुकथाग्रन्थसन्दर्भं गद्यमयं विहाय नान्या कापि पन्थेति, अञ्चितश्चैतत् । सरससरसास्सरलसरलाश्च निबन्धा हृद्यगद्यानुबन्धाः, न केवलं परिप्रीणयितुं प्रवणा बालानां संस्कृतमधिजिगांसमानानां मानसानि, किन्तु लब्धवैदग्ध्यानामपीति न तिरोहितमेतत् । अत एव परिश्रमस्तादृशानां प्रबन्धानां विरचने परिदृश्यते । यद्यपि श्लेषबन्धबन्धुरतराणि कादम्बरीप्रभृतीनि गद्यकाव्यरत्नानि भट्टबाणप्रभृतयो महाकवयः, तथापि तानि सर्वेषामावर्जयितुं हृदयानि न सामर्थ्यमुपगच्छन्ति । व्युत्पन्नमनोविनोदहेतवोऽपि न व्युत्पित्सुभ्यो नियतमुपकर्तुं

प्रभवन्तीति नापलापमर्हत्यभिप्रायः केषाञ्चिद्विदुषाम् । महत्यस्मिन्नपारे संस्कृतसाहित्यरत्नाकरे हन्त सङ्क्रन्दन्ते गद्यग्रन्थः कतिचिदेव कृतिस्रोतस्विन्य इति । विरलविरलान्यपि गद्यकाव्यानि कादम्बरीप्रभृतीनि दीर्घसमाससमाकुलानि, कविवैचक्षण्यमात्रप्रतिपादनपरत्वेन सन्दिह्यमानैरनणुभिर्वर्णनैः परिपूर्णानि सर्वजनमनोहारीणि कथङ्कारं भवेयुरिति कतिपयोपक्षिप्ताक्षेपोऽपि नातिदुष्यतीति भाति विमर्शं कृते । ईदृशि गद्यकाव्यान्युद्दिश्यैव "गद्यं कवीनां निकषं वदन्ति" इत्युदस्थादिव प्रवादः । अत्रेदमाकूतं, अवितथ्यमेव प्रामाण्येन सर्वेषां प्रवादानामिति नैव कश्चन नियमः। वस्तुतस्तु त एव भावाः, ये कादम्बर्यादावुपलभ्यन्ते, यदि प्रदर्श्येरन्नसरण्या सरलया तदा परा कोटिं कवितायाः विभायाद्ध्यारूढो भट्टबाणप्रमुखः कविलोकः । अथवा किं कुर्वीरंस्ते महाकवयः तात्कालिकविद्वज्जनमनोविनोदनं कर्तुमभ्यमन्यन्तेव नियतमन्यः पन्था नास्तीति । अधुना तु प्रख्याप्यन्ते क्रमान्महिम्नस्तत्स्वात्मनाम् । वैरल्ये च समुन्मीलति कालक्रमेण विचक्षणानामश्नुवत इव वैफल्यं कादम्बर्यादीनि गद्यकाव्यानि । सत्यापयतीवेममभिप्रायं सर्वेषां परिदृश्यमानोऽयमनादरभर. । यद्यपि व्याख्यानव्याख्येयाख्यायिकाभाष्यप्रमुखास्सर्वेऽपि लेखास्छन्दोविहीना अन्तर्भवन्ति गद्येषु, तथापि तेषां मिथस्तारतम्यं जागर्त्यव सहृदयहृदयसमभिगम्यम् । न हि कृत्स्नं प्रयुज्यमानं वाक्यं समर्हति गद्यकाव्यव्यपदेशम् । एवञ्चेत् "गौरिव गवयः" इत्यादीनामप्यलङ्कारविरहितत्वेन सर्वाभिमततां गद्यकाव्यत्वापत्तिः । अपि तु चमत्कृतिजननद्वारा सहृदयहृदयाह्लादकत्वेन प्रसिद्धानामेव वाक्यानामभ्युपेतव्यमबाधं गद्यकाव्यत्वम् । अयमेव सर्वानुमतः पन्थाः । कोऽयमुन्मत्तः श्रद्दधीत समर्थयितुं गद्यकाव्यत्वं सामान्यतो व्याख्यानात्मनामपि वाक्यानाम् । एवं रीत्या विमर्शे क्रियमाणे निर्बाधमेव सिध्यति गद्यकाव्यत्वं कादम्बर्यादेः । परन्तु सर्वानुपकारकत्वादृते नान्यमुन्नाम्बमानं दोषं पश्यामः ।

अयमस्ति कश्चिद्विशेषो मनसि निधातव्यः । सत्स्वपि भाव्येष्वितरेषु

व्याख्यानलक्षणेषु पुष्णदमन्दं सौन्दर्यमजह्त्काव्यलक्षणं विलक्षणेन स्वलक्षणेन परां चमत्कृतिमादधत्प्रीणयति सहृदयान्निजगुणगरिम्णा गद्यं भाष्यमक्रमेव। किमु वर्णयामः, प्रतिवाक्यमुद्गलन्तमिव न्यस्तं रामम सौन्दर्यसारम्। अपि नाम कश्चित्सरकृतसंसारेऽपारे मन्थ कां ख्यक्ति शयानं महाभाष्यं प्रदर्शयितुं पुरोऽस्माकं प्रादुःष्यात्। अशेषप्रपमाविशाष परिष्कृतं फणिपतिभाष्यं हन्त। निसर्गसरलया प्रणालिकया क्रियन्तं दुरूहमपि वस्तुतत्त्वं प्रतिपादयतीति विस्मृशत। बालैरपि सुज्ञ यो वाक्यसन्तान। पदार्थस्तु दुरवबोध कृतपरिश्रमाणामपि सुधीन्द्राणाम्। एतदेवाभिप्रेत्य कैयटश्चष्टे "भाष्याब्धिः क्वातिगंभीर" इति।

"भाष्यं प्रसन्नगम्भीरमि"ति प्रवादोऽपि सत्यमेतद्विषयक एवेति समाकलनीयं सद्भिः। किं बहुना भाष्यमित्यन्वर्थसंज्ञाप्यनौपचारिकत्वेन सुश्लिष्यत महाभाष्यस्यैवेति निश्चप्रचमाचक्ष्महे। भाष धातोर्हि भाष्यशब्दो निष्पन्न। व्यवह्रियमाणा हि भाषा भवति। भाषा च प्रयोज्यप्रयोजकवृद्धव्यवहार एवेति विनिर्णयो विदुषाम्। अत एवोक्तिमत्युक्तिरूपयैव फक्किकया प्रवृत्त तद्विशदयितुं विषयानशेषान्। अम्लानैः कुसुमैरिव लोभनीयैर्नैसर्गिकपरिमलनिर्भरैरसमस्तैरेव पदैः संदृब्धमेतन्महाभाष्यमभिनवपुष्पवनसमानमसमानमालोकयाम। अलमालापेन प्रसक्तानुप्रसक्तेन। सर्वथा निर्विवाद गद्य दुर्घमिति। गद्यकाव्यपरिशीलनशालिना विमायाविदं, शब्दत प्रसन्नो भावतो गम्भीर, सुश्लिष्टग्रन्थो गद्यग्रन्थो भृशमसुकर कवीनामिति। "गद्यं कवीनां निकषं वदन्ती"त्यभियुक्तोक्तिरनद्विपगि कैव, न तु सामान्यतो गद्यकाव्य विपयीकरोतीति वाढमातिष्ठा महे। न हि प्रयत्नशतैरपि मर्त्यं स्वयमतिशयितुमृषीन्भाष्यकार। दीनधिगतशब्दसाक्षात्कारान्कृतसामर्थ्यो भवति। अत एव सुदुर्लभतरा गद्यकवय। न हि 'राजा जयति विष्णुर्नम्या' इत्यादि-कतिपयशब्द सन्निवेशकरणमात्रेण सिध्यति गद्यकवित्वमित्यसकृद्वोचाम। संस्कृतापक्ष मनीषिभिर्विशेषतो माननीयो भवति कविर्विष्णुशर्मा। स हि विविधु

विचित्रान्वाक्यविशेषान्परिकल्प्य स्वकपोलेन, हृद्यं न पद्यं न पद्यानां सरस-सरसानां, विशदयशीतिशतमतितरामावर्जयति बलादन्तःकरणम्। परमं कार्तार्थ्यं निवेदयितुमधमर्णो भवति सकलसंस्कृतलोकः। एतद्गुणार्थिनः कतिपये गद्यकवयः कृतोपकारा एव बालकानां व्युत्पद्यमानानामपि तेभ्योऽप्यधमर्णा वयम्। बन्धनियमाद्विनिर्मुक्ता गद्यपद्धतिर्नैव रोचते सहृदयेभ्य इति नेदं वचनार्हम्। न भ्रमितव्यं गद्यं बन्धानपेक्षमिति। विपरीतं, बन्धसद्भावरूपमपेक्षते कञ्चन निर्बन्धमित्यहो। गद्यस्य सुदुष्करता। यथैतत्तथा विशदमुपपादयिष्यते निबन्धनिकषाभिधेऽस्मत्प्रबन्धे। यावन्तो नियमाः पद्यकरणे, तावन्तो नात्रेति यदि मतं तदपि श्रद्धेयमेव। सर्वथा बन्धराहित्यं गद्यस्येति कथनमुन्मत्तप्रलपितमेवेति। कतिपय-नियमाभावेऽपि वारसुभ्रुवः, यथा विभ्रमैरदभ्रैः सर्वजनमनोहारित्वं, तद्वदेव सुरसरस्वत्या गद्याकृतिरूपायाः। यद्यपि पत्रिकाप्रवर्तका गद्यस्य स्थानमुच्चैस्तरां कामयन्ते प्रदातुं, अभिलषितमेवैतन्नः, तथापि मनोरथ-परिपूर्तिरिह गद्यविषये करणीया परमेश्वरेणैवेति* विभावयन् पद्यविषये विस्रष्टुं यथेष्ट समुपक्रमे॥

(क्रमशः)

---

* पत्रिकाप्रवर्तकाः पुनः प्रबन्धूनेव परमेश्वरपदवीमारोपयन्ति। ते च यदीदृशं बन्धसंयमितं गद्यरत्नं प्रहिण्वन्ति, कुर्वन्तोऽपि तथैते किं वा प्रति-पद्यन्ताम्। परमियं प्रथमा सृष्टिः परमेश्वरस्येति कथञ्चिदाश्वसिमः। अन्यथैव सृष्टिरन्यथैव च संहृतिरिति इदं विज्ञाय व्याप्रियमाणानिच्छामः समालोचक-महाशयान्। मा नाम समालोचकाः सूचकाः स्युः। सं०

अधस्तन-नवीन कालिदासादीनामुपरि

# कविमुनेर्भासस्य प्रभावः

( पूर्वानुवृत्त. )

[ निबन्धकः — श्रीदुर्गादास-गोस्वामी काव्यतीर्थः बी. ए.

इदं श्लोकद्वयं व्याचक्षाणेन मल्लिनाथसूरिणा महति सङ्कटे पतितम्। तेन पुनर्मार्मिकेणोपलब्धं यत् कविर्लक्ष्मणं ज्येष्ठं भरतञ्च कनिष्ठं मेने। स तु मूलरामायणात् घटनाजातमन्यथाकर्तुं साहसिको नाभवत्, किन्तु रामायणेन सङ्गतिं परिरक्षितुकामः कुटिलेन मार्गेण श्लोकद्वयं व्याचष्ट, स्वकीयमनार्जवञ्च स्फुटं न्यवेदयत्। अथ स नाम व्याख्याता भासरूपकैः साकं परिचितो भवेत् तर्हि तदुल्लेखेन निराबाधं समस्यामीमांसामादधीत। तत्तु नानेन विदुषा कथञ्चित् कृतमित्युन्नीयतेऽस्माभिरिदंतरं मल्लिनाथसूरेर्भासप्रबन्धाज्ञता। इहास्माभिर्मल्लिनाथव्याख्यानात् कियान् भाग उद्धृयते। तत एव विमलप्रज्ञैर्भवद्भिरनायासमवबोद्धुं शक्येतास्माकमुपपत्तिपरम्परा। ननु, अवदधतु भवन्त :—

"ननु रामायणे—'ततो लक्ष्मणमासाद्य वैदेहीञ्च परन्तप। अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत्॥' इति भरतस्य कानिष्ठ्यं प्रतीयते, किमर्थं ज्यैष्ठ्यमवलम्ब्य अनार्जवेन श्लोको व्याख्यात. ? सत्यम्। किन्तु रामायणे श्लोकार्थः टीकाकृतोक्तः श्रूयताम्—'ततो लक्ष्मणमासाद्य' इत्यादि-श्लोके आसादनं लक्ष्मण-वैदेह्योः, अभिवादनन्तु वैदेह्या एव। अन्यथा पूर्वोक्तं भरतस्य ज्यैष्ठ्यं विरुध्यते इति।"

नूनमेतावद्भिः प्रमाणप्रपञ्चैरस्मदुपन्यस्तैः सर्व एव निर्मलमतयो विद्वांसो व्यापारमिमं प्रणिधास्यन्ति, समर्थयिष्यन्ते चास्माकीनं पक्षमिति विश्वसिमः।

भासप्रणीतानां रूपकाणां मध्ये कालिदासरतानाम् स्वप्नवासवदत्तप्रतिमाभिषेकाविमारक-प्रभृतिभिः समधिकं प्रभावितोऽभवदिति प्रागेवास्माभिरावेदितम्। कालिदासकृतेरभिज्ञानशकुन्तलम्-नाटकान्तर्गताख्या प्रस्तावनापि भासकृत-प्रतिमानाटिकायास्तदाख्यया प्रस्तावनया साकं भृशं संवदति। मनाग् मनःसमाधिनाप्ययं विषयः सुकरः प्रतिपत्तुम्। पश्यन्त्वभिरूपाः—

प्रतिमानाटके सूत्रधारः।—आर्ये! इममेवेदानीं शरत्कालमधिकृत्य गीयतां तावत्।

नटी।—अय्य! तह (आर्य! तथा) (गायति)

सूत्रधारः।—अस्मिन् हि काले चरन्ति पुलिनेषु हंसी काशांशुकवासिनी सुसंहृष्टा।

(नेपथ्ये)

अय्य! अय्य!

सूत्रधारः।—भवतु, विज्ञातम्।

मुदिता नरेन्द्रभवने त्वरिता प्रतिहार-रक्षी च॥

अभिज्ञानशकुन्तले—

...सूत्रधारः। किमन्यदस्याः परिषदः श्रुतिप्रसादनतः। तदिममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम्। सम्प्रति हि—

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः॥

नटी।—तह (तथा) (गायति)

ईसीसि चुम्बिआइं भमरेहिं सुउमारकेसरसिहाइं।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं॥

सूत्रधारः।—आर्ये! साधु गीतम्।......

नटी।—... ... ... ...

सूत्रधारः।—आर्ये! सम्यगनुबोधितोऽस्मि। अस्मिन् क्षणे विस्मृतं खलु मया। कुतः

तत्रास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥

एतान्यपि सूक्ष्मेक्षिकया द्रष्टव्यानि—

इदानीं भूमिपालेन कृतकृत्याः कृताः प्रजाः ।
रामाभिधानं मेदिन्यां शशाङ्कमभिषिञ्चता ॥—प्रतिमा०

रत्नाकरं वीक्ष्य मिथः स जायां, रामाभिधानो हरिरित्युवाच ॥

—रघुवंशे १३श सर्गः

सीता—पावअं किदं। गच्छ, णिय्यादेहि [ पावकं कृतं। गच्छ निर्यातय। ]—प्रतिमा

शकुन्तला—पावक. खलु वचनोपन्यासः ।

सीतायाः कौतुकवशाद् वल्कलपरिधापने भासकविः प्रचुरां काव्यकलां प्रादर्शयत्, यतोऽयं व्यापारः परिणामविरसतया प्रत्यक्षीक्रियते तस्या अनन्तरमेव क्रियमाणे वाल्मीकितपोवने निर्वासनवैशसे । तत्र तु तत्त्वत एव जानकी परुषवल्कलकं वसानेव परिलक्ष्यते, विक्लवयति च सहृदयान्। कालिदासेनापि शकुन्तला परिहितवल्कलाञ्चलैव प्रथममस्माकं पुरः स्थापिता। उभयत्रापि प्रबन्धे द्वे अपि नायिके सोदरस्नेहेनैवालवालेषु घटाम्बुभिस्तरुगुल्मवीरुधः सिञ्चन्त्यौ नयनपथमस्माकमवतरतः।

कालिदासस्य रघुवंशेऽपि वयमनुरूपाणि दृश्यानि समधिगच्छामः ।

तद्यथा—

आपृच्छ पुत्रकृतकान् हरिणान् द्रुमांश्च,
विन्ध्यं वनं तव सखीदयिता लताश्च । प्रतिमानाटके ।

एषा त्वया पेशलमध्ययापि घटाम्बुसंवर्धितबालचूता ।
आनन्दयत्युन्मुखकृष्णसारा दृष्टा चिरात् पञ्चवटी मनो मे ॥ रघुवंशे।

शाकुन्तले चतुर्थाङ्के पतिगृहयात्रायाः प्राक् शकुन्तलापि प्रियान् हरिणपोतकान्, वनज्योत्स्नादिलताश्चूततरुश्चापृच्छमाना दृश्यते ।

भवभूतिप्रणीते उत्तररामचरितेऽपि ।

यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् । इत्यादि

पुनः अनुचरति शशाङ्कं राहुदोषेऽपि तारा
पतति च वनवृक्षे याति भूमिं लता च ।
त्यजति न च करेणुः पङ्कलग्नं गजेन्द्रं
व्रजतु चरतु धर्मं भर्तृनाथा हि नार्यः ।। प्रतिमानाटके.

अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ।—रघु. १४

अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी । [ कुमार, ४र्थ

राम. । मैथिलि ! किमिदमिक्ष्वाकूणां वृद्धालङ्कारस्त्वया धार्यते । प्रतिमा०

वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ।—इत्यादि रघु,

अयममरपतेः सखा दिलीपो रघुरयमत्र भवानजः पिता मे ।

प्रतिमा, ३य-सर्ग

कालिदासस्तस्य रघुवंशेऽपि हित्वान्यान् पूर्ववर्तिनः सूर्यवंशीयान् भूभुजः स्फुटमेतानेवाग्रे श्रेन राज्ञः सप्रपञ्चं वर्णितवान् । क्रमोऽपि स एव कालिदासेन गृहीत इति नाविदितचरं कालिदासकाव्याध्येतॄणाम् ।

सचिवनिर्देशानुसारात् सूतो भरताय केवलं दशरथामयं न्यवेदयत् । निष्कलङ्केन भरतेन पितुर्दशरथस्य मरणं रामादेर्विवासनञ्च न विदितं । परमस्य सर्ववृत्तान्तसाक्षिणा हृदयेनावेद्यमानो भरतो गाढमदूयत, तथ्यख्यापनाय सारथिं पुनः पुनरन्वरुणत । तत्र तु कविवरेण भरतस्य शङ्कोद्वेगभयादिभावाः परमेण पाटवेन वर्णिताः । नन्दिग्रामादयोध्यां प्रत्यागच्छतो भरतस्य सारथिना समं संवादः श्रूयतां भवद्भिः :—

( क्रमशः )

सुन्दरदेव-संकलितः

# सूक्तिसुन्दरः

( पूर्वानुवृत्तिः )

[ डा. श्रीयतीन्द्रविमलचतुर्धुरीण-सम्पादितः ]

क्षोणीकाम निजामशाह भवतः प्रौढैः प्रतापानलै-
र्द्रागेव द्रवरूपतामुपगते चामीकराणां चये।
भ्रश्यद्धासवधामधोरणि मुहुर्मज्जद्ग्रहग्रामणि
त्रस्यत्नकामिनि निष्पतद्वनितले मेरुः समुन्मीलति ॥१०५॥
भानुकरस्य ॥

स्थाणुः कूर्मोऽत्र यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्तिप्ररोहः।
अर्चिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना
शत्रुश्रेणी पतङ्गा जयति रघुपते त्वत्प्रतापप्रदीपः ॥१०६॥
हनूमतः ॥

वदन्तु देव तावकं प्रतापमेव पावकं
महातुषारशीतलं वदाम हे वयं यतः।
सुमेरुकन्दरोदरस्थितो गृहीतकम्बल-
स्तवारिवर्गपङ्कजः (?) प्रकम्पते मुहुर्मुहुः ॥१०७॥
कस्यापि ॥

सञ्जाते (?) द्रवरूपतां हि रजताद्रौ स्वर्णशैले द्रुते
भूमीपालललाम-माणिकविभो [:] प्रौढैः प्रतापानलैः।
योगेऽभूदनयोः सुपाण्डुररुचिः सा तेऽरिकान्ताजनै-
र्नीता स्वीयकपोलयोश्च विरहव्याजेन गोपायते ॥१०८॥

त्वत्प्रतापानलध्येम-संपुटेऽतिमनोहरे ।
ब्रह्माण्डशालिग्रामोऽसौ धराधीश विराजते ॥१०९॥

लाटक्ष्मान्तकि चम्पकन्तकि सहस्रांशुन्तकि प्रस्फुरन्
गोमेदन्तकि वीतिहोत्रविचलज्ज्वालाटालन्तधि ।
लालाद्रिन्तकि केशवाम्बरमहतकान्तिन्तकीह प्रभो
विद्युद्दीप्तिगणन्तकि प्रतिदिनं भूमौ प्रतापस्तव ॥११०॥

वृद्धं प्रतापं तव भूप जेतुं मेरुं परं वीक्ष्य रविः सुमेरुम् ।
द्राग् द्वादशात्मा शतसंख्यरश्मिः सप्ताश्व आसीन्मित आशु चण्डः ॥१११॥

मन्ये त्वत्तरुणप्रताप इह सज्ज्योतिर्विभो चिन्मयं
यस्याशाः कनकावदऽ (?) वाहनाथ-शम्वादयः ।
त्यक्त्वस्यादिसुखाः कृशा गिरिगुहारण्यादिसंस्थाश्चिरं
ध्यायन्त्वेतदरिव्रजाः कथममी निर्वाणहेतोः स्थिरम् ॥११२॥

सुन्दरदेवस्यतौ ॥

भङ्गाकीर्तिमषीमलोमसतमप्रत्यर्थिसेनाभट-
श्रेणीतिन्दुककाननेषु विकसत्यस्य प्रतापानलः ।
तस्मादुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं
भालोद्भूत-भवाक्षि-भानुहुतभुगजम्भारिदम्भोलयः ॥११३॥

श्रीहर्षस्य ॥

शम्भुर्मानससन्निधौ सुरधुनीं मूर्ध्ना दधानः स्थितः
श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ ।
मग्नः पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभू-
र्मन्ये वीर तव प्रतापदहनं ज्ञात्वोल्वणं भाविनम् ॥११४॥

कस्यापि ॥

युष्मत्प्रौढतरप्रतापतपनज्वालावलिव्याकुले
ब्रह्माण्डे मधुसूदनोऽहिशयने शेते पयःसागरे ।

शम्भुर्जह्नुसुतां दधाति शिरसा भूमिस्तु पाराचलं
तापव्याकुलितः पतत्यनितरां भानुः समुद्रे मुहुः ।।११५।।

जगज्जीवनस्य ।।

मार्तण्डमण्डलसमं भवतः प्रतापं
ये वर्णयन्ति नहि ते कवयः प्रवीणाः ।
अम्भोनिधौ विलयमेति पतन् पतङ्गः
पारं प्रयाति पुनरेव भवत्प्रतापः ।।११६।।

शङ्करमिश्रस्य ।।

लोकेशः कर्णराजाद्भुतकनकम[या]त्तावकीनप्रतापाद्
ब्रह्माण्डानां समूहो द्रव इव भवनो स्ये[व] सम्भाव्य यत्नात् ।
तस्यापि प्लावनार्थं जलनिधिमकरोद् व्यर्थतामत्र यात
इव त्वद्वैरिनारी-नयननयनजैर्निर्ममे नीरधिर्न ।।११७।।
श्रीकर्ण प्रौढतेजाः प्रबलरिपुबलासह्य सन्तापदक्षो
नायं श्रीमत्प्रतापो जगति विलसति श्रीमहाराज किन्तु ।
मन्येऽहं कौशिकेनानुपमितमहसा नूतनस्वर्गसृष्टा-
वुत्कृष्टः सृष्ट एष प्रखरतरकरो भास्करोऽसौ द्वितीयः ।।११८।।

कयोरपि ।।

दुर्वारारातिराजीवनद्रवदहनः कोङ्कणो दिग्वधूना
सर्वाङ्गीणोऽङ्गरागस्त्रिभुवनभवनध्वान्तविध्वंसदीपः ।
त्वद्दोर्दण्डामदर्वीकरमुखहुतभुग् भूतधात्रीपुरन्ध्र्या
वासोमाञ्जिष्ठमुर्वीरमणकुलमणे जागरीति प्रतापः ।।११९।।
भूजाने किं न जाने भवदतुलभुजभ्राजमानप्रताप-
ज्योतिर्ज्वालावलीभिर्जलनिधिवलये निर्जलं किन्न भूयात् ।
युष्मत्प्रत्यर्थिपृथ्वीपरिवृढवनितानेत्रनीरस्रवन्ती-
स्यूतस्रोतःसहस्रैरयमिह परितश्चेन्न पूर्येत सद्यः ।।१२०।।

वेलामुल्लङ्घ्य हेलादलितधरणिभृद्वाहिनीकोटिपूर्ण-
कल्लोलत्काविलेन्द्रप्रबलजलनिधिः प्लावनायोज्जजृम्भे ।
स्यान्मग्ना मेदिनीयं प्रबलभुजबलप्रोढतश्चन्द्रहास-
ज्वालाभिः सन्ततं चेन्न दहति वडवावीतिहोत्रो वघेल ॥१२१॥

अकबरीकालिदासस्य ॥

त्रैलोक्याभयदानकल्पितमतिश्चोत्तप्रभो भास्वरः
स्वैरं स्वस्तटिनीतटेऽपि निहृरन भाति प्रतापस्तव ।
माघे मज्जनशीतसम्भ्रमयुता मुग्धा भूलोकस्त्रि[य]ः
स्तम्भान्तं निजपाणिपद्मनिवहैः संभावयन्त्यादरात् ॥१२२॥

कस्यापि ॥

इति श्री सु० स० सु० प्रतापवर्णनतरङ्गः ॥

॥ अथ हय. ॥

अलक्षितगतागतैः कुलवधूकटाक्षैरिव
क्षणानुनयशीतलैः प्रणयकेलिकोपैरिव ।
सुवृत्तमसृणोन्नतैर्मृगदृशामुरोजैरिव
त्वदीयतुरगैरिदं धरणिचक्रमाक्रम्यते ॥१२३॥ कस्यापि ॥

इयती जगती कियती भविता नमितानततामिति याति हयः ।
वियदङ्गनरिङ्गणरङ्गणभूर्विमृशन्निव नर्तनमातनुते ॥१२४॥

अकबरीकालिदासस्य ॥

तप्तां गामिव संस्पृशन्ति गतिभिर्यामुत्पतन्तो मुहु-
रन्तेवासिन आजवश्रुतगतीनध्यापयन्तोऽनिलान् ।
देव स्वीयखुराग्रदीर्णवसुधाधूलीवितानं बला-
राग्यश्चो नदनं पठिष्यति हि नस्तन्वन्ति वाहास्तव ॥१२५॥

सुन्दरदेवस्य ॥

( क्रमशः )

# संस्कृत-नाटकानि

( पूर्वानुवृत्तिः )

[ निबन्धकः—वि. कृष्णस्वाम्ययङ्गार्यः ]

केचित्तु कृत्यल्युटो बहुलमिति बाहुलकाद्दीयतेऽस्मै दानीयो विप्र इत्यादि-रीत्या संप्रदानादिषु सूत्रकृताऽननुशिष्टेषु प्रत्युत तयोरेवेति नियमप्रतीत्यर्थं प्रयुक्तेनावधारणार्थकेनैव-शब्देन व्यवच्छिन्नेष्वप्यर्थेषु कृत्यप्रत्ययानां प्रवृत्ति-र्दृष्टा। तद्वत् प्रकृते नाट्यशब्देऽपि नाटीति चुरादिकात्सद्भावस्थापन्ने धात्वर्थे भावाख्ये यत्प्रत्ययो बाहुलकात्सूपपादः। 'तयोरेवे'ति सूत्रे कौमुद्या 'भावे औत्सर्गिकमेकवचनक्लीबत्वञ्चे'ति कण्ठरवेण प्रतिपादनेऽपि बाहुलकप्रमाणादुक्तार्थस्वीकारे न दोष इत्याहुः। यथाकथंचिद् व्युत्पाद-नीयान्येव प्रातिपदिकानीत्यागृह्णानानामुचित एष पन्था। अर्हादिष्वप्यर्थेषु कृत्यप्रत्ययाः प्रवर्तन्ते, परन्तु 'अवस्थानुकृति'रिति पर्यायशब्दस्य पर्यालो-चनया भावप्रत्ययान्तत्वं नाट्यशब्दस्य कथंचिद्वाऽनेतव्यमेवेत्यस्माभिरुपदर्शित-मेतद्रहस्यम्। एवमेव नृत्यशब्देऽप्यवगन्तव्यम्। नृत्तशब्दे तु नपुंसके भावे क्तविधानान्न कोऽपि दोष इति कृतमतिप्रसङ्गेन।

नृत्ते हि भावानामीषदपि न चर्वणपथावतारः संभवति, गात्रविक्षेपस्य मनोरञ्जनमात्रोपयोगिनस्तत्रोपलम्भात्। नृत्ये तु ताललयान्वयस्यात्यन्ता-नाश्रयस्य भावो न केनचिदपि लाक्षणिकेनाङ्गीकृतः। संगीतस्य विशेष: सम्पर्केण हि कौशलेनाभिनीयमानानां भावानां माधुर्यमति-रिच्यमानं सामाजिकानां संवननं परिणमति। संगीतसम्बन्धशून्यं तु भावाभिनयमात्ररूपमाङ्गिकबहुलमपि नृत्यं प्रेक्षकाणामभिमतमानन्दं न प्रकृषाति। नाट्ये तु नृत्तनृत्ययोरुभयोरप्यनुपलक्ष्यमाणो विशेषो नाम रसविषयकस्य सात्त्विकबहुलस्याभिनयस्य संघटना। अभिनयश्चतुर्धा विभक्तो नाटकलक्षणग्रन्थेषु। सत्त्वप्रधानानामनुभावानां संमर्दन

निरूप्यमानस्य स्थायिनो भावस्य रसाभिधानरशाभिनयस्सात्त्विकबहुल इत्युच्यते। परगतसुखदुःखादिभावनाभावितान्तःकरणत्वं सत्त्वमिति प्रतापरुद्रीये प्रतिपादितम्। स्तम्भप्रलयरोमाश्चादयोऽनिमेषनयनत्वादिभिराङ्गिकव्यापारैरभिनीयमाना अनुभावा रसपरिपोषे कारणीभूताः सात्त्विका इति व्यपदिश्यन्ते। तेषामभिनयोऽपि सात्त्विकताव्यवहारमर्हतीति स्फुटमेव। अंगक्रियारूपश्चाङ्गिकः, रागानुषंगिसम्भाषणादिरूपस्तु वाचिकः, भूषणाबन्धादिरूपश्चाहार्योऽभिनयस्सात्त्विकाभिनयस्योपकारकः सन् नाटकीयां श्रियं पुष्णाति। अवस्थानुकरणमेव नाट्यस्य जीवातुभूतं प्रधानस्वरूपम्। संगीतादीनामेतदनुगुणानां दृश्यनिर्माणादीनाञ्च बाह्यानां व्यापाराणां रंगप्रसाधनविधावन्तर्भूतानामेतस्मिन्प्रधानतया राजपदवीमधिश्रयत्यभिनये सेवकानामिव शोभाविशेषपोषणोपयोगि गौणत्वमात्रम्, यदानुषंगिकताव्यवहारे कारणम्। नानादृश्यानामुपकल्पनाद्रसाविर्भावस्सुलभो भवति। दृश्यप्रेक्षणेनोल्लसितचित्तवृत्तेः सामाजिकस्य नटानामभिनयदर्शनानन्तरमुद्दीप्तेषु भावेषु प्रज्वलद्रूपेषु प्रतिभातेषु रसचर्वणे प्रवृत्तेः संपादनात्।

नृत्तादेव नृत्यस्योत्पत्तिर्विमर्शकानामभिप्रेता। प्रथमावस्थायां हि मानवस्य शेमुषी शैशवमनतिक्रामन्ती मनोविनोदसाधनमपरिपूर्णरूपं नाट्यस्योत्पत्तिः किमपि कल्पयति। कालक्रमेण च न्यूनतापरिहारे प्रवर्तमानस्तस्य विवेकोऽन्ततस्समग्रसंविधानं परिपूर्णरूपं साधनमाविष्करोति। एष च विवेकाधीनस्साधनविपर्यासो न स्वल्पेनैव कालेन शक्नोति लब्धुमवकाशम्। परःशतेषु वर्षेष्वतिक्रान्तेषु निरन्तरविचारधारया निर्णयपदवीमधिरूढः कोऽपि विषयो यथाकथंचित्कार्यरङ्गमानीतो मानवीयायाः प्रज्ञायाः साक्षी भवति। एवमेव मनोरञ्जनार्थमुपकल्पिता संगीतविद्या प्रथमं नृत्तरूपेण प्रकाशमाना मानवमुपास्त। अनन्तरं च गच्छता कालेन प्रवर्धमानप्रज्ञस्यास्यैव मानवस्य प्रयत्नबलेन नृत्यमवततार। यत्र संगीतसंमिश्रितो भावाश्रयाभिनयः प्रेक्षकाणामानन्दकारी पदमलभत। अनन्तरं नृत्यस्य परिष्कृतं रूपं नाट्यमुदपद्यतेति क्रमविकासवादिनां

मतमिदम्। नृत्तनृत्ययोरसमानकालिकत्वमेवेति विमर्शकेषु केचिदभिप्रयन्ति। नहि केवलेन संगीतेन नटैरनिष्णातैर्गीयमानेन श्रोतृणामानन्दोत्पत्तिर्भवति संगीतकलायामप्रतिमं पाण्डित्यं सम्पादयन्तश्च विद्वांसो राजस्थानेषु प्रतिष्ठिता न तावन्नटपद्वीमलङ्कर्तुमलम्। तस्मात्താललयान्वितं गीतविशिष्टं गात्रविक्षेपरूपं नृत्तं न कस्यापि चमत्कारमावोढुमर्हति। तथा च नृत्यस्यापि प्रयोगो मनोरञ्जनायावश्यमासीत। (Really it was-अवश्यमासीत्) नृत्तन्तु नृत्यप्रेक्षकाणां मध्ये मध्ये वरत्वन्तरपरिकल्पनद्वारा कुतूहलस्य चिरमभिवर्धनाय प्रायुज्यत। एकरूपमेव किल दृश्यमानमभिनयादिकमपि कुतूहलस्य क्षणिकतया विप्रनाशे न प्रीतिमुत्पादयति। अतिपरिचयादवज्ञेति प्रकृतिनियमेन तत्र दिदृक्षोपशमात्। एवमेव भावाभिनयं प्रतिष्ठितविद्यासम्पत्तिः कृतहस्तोऽपि चिरस्य घटिका-(hour)धिकं कालं रसिकाग्रेसरोऽपि सूक्ष्मदर्शी न सोत्कण्ठमवलोकयितुमीष्टे। मध्ये च नृत्तस्य भावसंस्पर्शहीनस्य नानाविधाङ्गचालनरूपस्योपक्षेपाज्जातविनोदो रसिकः पुनरपि किञ्चित्कालविलम्बेनारभ्यमाणे नृत्ये दृष्टिं सौत्सुक्यमवतारयतीत्यत एतयोरुभयोरेककालिकत्वमित्येषामाशयः। न ह्यत्र विषये प्रमाणान्तराण्युपलब्धानि, येन झटिति विनिर्णयः संपन्नः। अधुना यावदनुवर्तत एव विचारधारा। "रामलक्ष्मणसीतार्थं स्रवन्ती वारि नेत्रजम्। असकृत्प्रैक्षत स तां नृत्यन्तीमिव मातरम्" (रामा० अयो. सर्गः ४०, श्लो ४६) इत्यत्र नृती धातुरुपयुक्तः। एतेन च श्रीमद्रामायणकालेऽपि नृत्यादिकं प्रचारमुपगतमासीदिति प्राचीनतममिदं नृत्यम्, यस्यैव रूपविपरिणामो नाट्यपदाभिधेयस्समवर्ततेति विमर्शकाग्रसरः कश्चिदुपपादयामास। वस्तुतस्तु बालकाण्डेऽयोध्यानगरवर्णनावसरे वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम्। उद्यानाम्रवणोपेतां महतीं सालमेखलाम् (बाल० सर्ग० ५, श्लो १२) इति पद्ये नाटकसंघानां प्रस्तावान्नाटकान्येव तस्मिन्नपि काले प्रख्यातानि जनजीवने प्रख्यातं पात्रमवहन्नित्यवगम्यते। तस्मान्नृत्यविषयकोऽयं विमर्शकस्यान्वेषणप्रयासो निष्फल एव। सर्वथा

नृत्तात् नृत्यस्य, तस्माच्च नाट्यस्योत्पत्तिरिति निर्विवादमेतत् सिद्धान्तस्तथा प्रतिपादितं सर्वैरपि।

वाद्यैर्नानाविधैरुपेतास्संगीतविशारदा गायकाः पद्यानि मधुरेण स्वरेण गायन्ति। नटास्तु नृत्यन्तः पद्यानि मन्दस्वरेण स्वगतभाषणरीत्या

नाट्यस्य गायन्तो भावप्रदर्शनं यथावसरं विरचयन्ति। एषा

प्रयोग च पद्धतिर्नृत्यरयेति तत्राभिनयमात्रस्य प्रतिपादना-

स्पष्टम्। संमिश्रणीयस्य संगीतस्यापि नटेनैव गानासम्भवात्। अथ गायताऽपि नटेनाभिनये दत्तावधानेन स्वरताललयादिषु विशेषतो दृष्टिनिक्षे-पस्याशक्यत्वेन रसभंगापत्तेर्वा। नाट्येऽप्येषा रीतिरधुना 'मलयालम्' देशीयानां 'कथकाले' नृत्य-दर्शनेन संभाव्यते। एतच्च मूकनाट्यमित्यप्य भिधीयते, नटेन केवलमेकस्यापि पदस्यानुच्चारणात्। पद्यान्येवं परिहर-न्नपि नटो गद्यानि परं स्वयमेवानुवदति; भावानुगुणमभिनयति च। गद्यभाषणे हि संगीतशास्त्रपरिच्चितानां कठिनानां नियमानामभावादभिनये नटस्यावधानमनुपहतमेव वर्तिष्यत, येन युगपद्गद्यभाषणरसाभिनयौ शक्यौ भवतः। एवमेव नाटके गद्यस्य प्रथमं प्रवेशो बभूव, येन नाट्यप्रयोग-मीक्षमाणानामभिनीतभावादेर्विज्ञानं सुलभं पर्यणंसीत्। अन्यथा विदग्धेनाऽपि प्रेक्षकेण, संगीतमाधुर्यरक्षणाय साहित्यभागमुपेक्ष्य शास्त्रनियमानवज्ञाय यथासमीहितं गानानुकूलस्थलेषु पदच्छेदप्रक्रममङ्गीकुर्वाणेषु वर्णानामभिव्यक्त रूपाणामनाकर्णनात्कथं नाम पद्यानामर्थो विज्ञातव्यः, कवितावमत्कारो निरूपणीयः, आस्वादनीयश्च रसः? गद्यानामुपयोगे तु स्वरसतः कवि-तात्पर्यावगमाच्चमत्कृतचित्तस्य रसिकस्याभूतपूर्वानन्दानुभवस्सुलभो भवति। अत एव नाटकेषु निसर्गतो गद्यस्यैव प्राधान्यमिति हृदयंगमो वादः। पद्यानि तु सगीतमिश्रणार्थमुपयुज्यमानानि सामाजिकानामुल्लाससाधन उप-कुर्वन्ति। अतो नाट्यस्य प्रयोगदशायां केवलपद्यात्मकानां नाटकानामभि-नयमध्याधिरोहणमशक्यमवलोक्य विद्वांसो गद्यस्य प्रवेशमनुजज्ञुः।

( क्रमशः )

इत्थं राजाकर्ण्य वणिग्युगैर्गिरं मार्गं विनिर्दिश्य मृषैव तस्करम् ।
क्रमेण ते राजसभामुपागमन् दौवारिकानुष्ठितभूरिमाननाः ॥४१॥
असौ सुधर्मेव सुरस्यतोरणा द्वारे लसन्मङ्गलकुम्भशोभना ।
श्रिता च जीवत्कदलीतरुश्रिया प्रसूनमालाकलिता समन्ततः ॥४२॥
अन्तः पृथग्वर्तितवेदिकावली पृथक्प्रकारैर्मनुजैरलङ्कृता ।
मुक्तालताशोभिवितानमञ्जुला सुकोमलास्तीर्णमनोज्ञसंस्तरा ॥४३॥
प्रान्ते च यस्या बहुशालभञ्जिका-विचित्रसिंहासनमुज्ज्वलप्रभम् ।
सुवर्णदण्डावलिधारितोल्लसच्चन्द्रातपालम्बिमणिप्रभासितम् ॥४४॥
कौशेयवस्त्रावृततूलिकास्तृतं रम्योपधानत्रितयं मनोहरम् ।
ज्वलत्प्रदीपद्वितयेन पार्श्वयोर्नश्यत्तमःस्तोममशेषदर्शनम् ॥४५॥
तत्रोपविष्टो नृपतिर्महामहाः संवीज्यमानः सितचामरानिलैः ।
शुभ्रातपत्रेण नृपश्रिया श्रितः किरीटकेयूरककुण्डलान्वितः ॥४६॥
वामेऽप्यदूरे शितलोहनिर्मितदण्डावृता दण्ड्यजनस्य वेदिका ।
दक्षे तथा दक्षतमैरधिष्ठिता वेदिर्महामात्यगणैरुपस्कृता ॥४७॥
दूरे पुरो दर्शकलोकवेदिका समुत्सुकैर्लोकशतैर्निरन्तरा ।
महीपतेरस्य सभा प्रभावतश्चित्रापि तेषामस्त तथापि निश्चला ॥४८॥
आदेशमादाय भटा महीपतेस्ततो वणिग्भ्यां विविशुः सभागृहम् ।
क्षणं तदा तत्परिलोकनेच्छया विलोलता तत्र जनेष्वदृश्यत ॥४९॥
पुरा पुरेऽस्मिन् बहुमानभागिनौ वणिग्वरौ शृङ्खलितौ विलोक्य तौ ।
महीपतौ पारिषदेषु चाभितः पदं दधेऽपूर्वरसो हि विस्मयः ॥५०॥
अथानयन् दण्ड्यजनस्य वेदिकां वणिग्वरौ ते पुरुषा महीपते ।
सापत्रपं मण्डलयेन तावता कथञ्चिदेतावथ वेदिकां गतौ ॥५१॥
उवाच राजानमथो भटेश्वरः कृतानतिः प्रश्रयपूर्णमानसः ।
महीभृते स्वस्ति वणिग्नृपाविमौ प्राप्तौ सलोप्त्रं नृपहारतस्करौ ॥५२॥
अथाधुना दण्डविधौ सहागसोः प्रमाणमेव क्षितिपालनायकः ।
यदस्ति योग्यं कुरुतां तदेतयोः समाप्तकृत्यां वयमत्र मागताः ॥५३॥

उवाच राजा भटनायकं तत प्रीतान्तरः सौदरदृष्टिमर्पयन् ।
भटेश कृत्यं भवतोऽभिनन्द्यते यदद्य सार्थं त्वदधिष्ठितं बलम् ॥५४॥
वणिक्पते लक्षपते चिरं त्वया सहैव जामातृवरेण सन्ततम् ।
सुवृत्तमावर्त्तितमत्र मे पुरे समग्रमेवैकपदेऽद्य नाशितम् ॥५५॥
आस्कन्दितस्तीव्रशिखः पदानलः संघट्टितः कृष्णभुजङ्गमोऽथवा ।
यच्चौर्यमाचर्य महीपतेः कुले हारं महिष्या हृतवान् पुरा भवान् ॥५६॥
न तस्करोऽस्मीति न योग्यमुत्तरं सलोप्त्रकः प्रापि यतो भटैर्भवान् ।
तथापि वाचा वदतु त्वदूषणं मृषास्तु मा दोषगिरासवासना ॥५७॥
अथाह मानक्षयलज्जितान्तरो जडीकृतः क्षोभविपोपयोगतः ।
वणिक्पतिर्लक्षपतिश्छलन्मनिर्जयत्यसौ भूतलवासवः श्रिया ॥५८॥
महीपते पूतचरित्ररक्षणव्रतः सुवृत्तं परिपालये चिरम् ।
स्वप्नेऽपि तद्भङ्गविधामपश्यतः कथं नु तादृग्विषये प्रवर्त्तनम् ॥५९॥
अत्यल्पमात्रद्रविणेन सज्जनो निजेन सन्तुष्यति भाग्यभाविना ।
लोष्ट्रायमाणं परवित्तमूर्जितं सत्त्वोपरक्तेन हृदा समीक्षते ॥६०॥
जानामि राज्ञः प्रबलप्रभावता तथा सुवृत्तच्युतिदुर्यशो महत् ।
तथैव चौर्यं कलुषं निरङ्कुशम् तथापि किं स्यान्मम दूषणे मतिः ॥६१॥
कुतो मदीये सदने समागमो हारस्य नाहं तदवैमि तत्त्वतः ।
देवद्विजानामभिधानतः शपे जामातृयुक्तोऽहमपेतदूषणः ॥६२॥
श्रुत्वा वणिग्वाक्यमथो क्षितेः पतिः सक्रोधमाह प्रसितं भटेश्वरम् ।
स्वच्छन्दतो दोषमयं न वक्ष्यते विसृज्यतां स्वात्मजनस्तमोगृहे ॥६३॥
यदि स्वदोषं स्वयमेव कीर्त्तयेत तदैव तस्माद् भविता विमोचनम् ।
इतोऽन्यथा तत्र विभीषणोदया सुदुर्गतिः शाश्वतिकी किलानयोः ॥६४॥
अवनिपतिनिदेशाद् वीरमुख्याः पुनस्ते दुहितृपतिसमेतं तं सता वर्यमर्यम् ।
तिमिरभवनमुग्रं लङ्घयित्वा सभाया बहिरतिलघुगत्या प्रापयन् मुख्यमार्गम् ॥६५॥

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये
वणिक्संयमनाख्यः पञ्चदशः सर्गः

## षोडशः सर्गः

ततोगृहात् सपदि भटा विनिर्गताः क्रमादमी तिमिरगृहान्तिकं ययुः ।
वणिग्वरं तदनु भटेश्वरोऽवदद् रुषा क्षिपन् परुषपदं शुभास्पदम् ॥१॥
वणिग्वर! श्रुतमवनीपतेर्वचो वृथा कथं प्रथयसि नो तदर्हणाम् ।
कलानिधौ सकलकले नभोगते कुहूनिशेत्यनृतवचो न युज्यते ॥२॥
पुरो विलोकय विषमं तमोगृहं सदूषणैरनिशमधिष्ठितान्तरम् ।
स्वयं न चेद्वदसि मुखेन दूषणं तदा तदन्तरमचिरं निवेक्ष्यसे ॥३॥
सुदुःसहा तिमिरगृहे स्थितिर्नृणां सुदुस्तरामयशतहेतुसङ्कुले ।
विभावितं नहि भयाय कल्पते ततोहितं स्मर परिमुञ्च दुर्ग्रहम् ॥४॥
कदन्नकं परिगतमर्द्धपक्वतां कषायितं सलिलममेध्यपङ्किलम् ।
तमोगृहे प्रतिवसता प्रमादिना मुमूर्षतां कथमपि जीवयत्यसून् ॥५॥
तदप्यमी नहि ददते यदृच्छया क्षुधातृषाजनितरुजो भटेक्षिताः ।
परिश्रमैर्मुहुरसमैरुपद्रुताः प्रभुञ्जते निरयनिवासपेषणम् ॥६॥
हिमागमे सलिलनिषिक्तविग्रहाः कृता भटैः पटुतरशीतपीडिताः ।
निदाघतो दहनगणैः समन्ततः प्रतापिताः क्षणमपि नो सुखस्पृशः ॥७॥
न चान्तरं सरति समीरणः सुखं ततोऽवशं श्वसितमितो विमुच्यते ।
परिष्क्रियाविरहिणि भूरिदूषणे रुजां गणः प्रतिदिनमेव वर्द्धते ॥८॥
न यावता भवति विचारनिर्णयो न तावता धरणिगृहाद् विमुच्यते ।
विनिर्णये सति च ततो नृपैः कृते श्मशानके गतिरथवा मतङ्गजे ॥९॥
श्मशानकं स्मर विषमश्रिया युतं यतो जनः प्रविशति नो भयान्वितः ।
नृपाज्ञया भवति वधे यदीक्षणात् प्रमादिनः स्फुटितहृदः पतन्त्यधः ॥१०॥
इतस्ततो मनुजकपालमालया सुभीषणं निचितमिहावनीतलम् ।
धरोरसि स्थिरतरयूपलम्बिता वितन्वते प्रतिभयमस्थिसञ्चयाः ॥११॥
रजोवृतैर्दलनिकरैस्तमस्विनो महीरुहा यमभटवायसाचिताः ।
निशागमे कटुरवपेचकाकुला मनोभयं विदधति सीम्नि सङ्कुलाः ॥१२॥

विदूरतो मनुजनिशोणिताशया रामन्ततः प्रचरति जम्बुकावली ।
परस्परं विमतिभृतो निराविणो नयन्त्यधो नरवपुरूर्ध्वलम्बितम् ॥१३॥
शरीरतः क्वचिदपि दूरलम्बितादू वहत्यहो रुधिरमयी महानदी ।
क्वचित् क्षतप्रसृतविशुष्कशोणिता कलङ्कवन्मलिनधरा विराजते ॥१४॥
फलं वधः कलुषकृतां न भिद्यते कृतानुगं प्रचरति साधनं पृथक् ।
विचित्रता यदि श्रृणुते हि साधनं फलेऽपि सेत्यनयविदां समीरितम् ॥१५॥
विरोप्यते किमपि वपुस्त्रिशूलतः कृपाणकैः किमपि विखण्डितं तथा ।
शुनापरं मदविकृतेन खाद्यते क्वचित्त्वचः क्रियत इतो विमोचनम् ॥१६॥
विधाय यः कलुषविधिं मुधाश्रयः स्खलन्मतिः प्रवदति नात्मना कृतम् ।
कृती नृपस्तमनु कठोरसाधनं समादिशत्यनतिचिरं विचारतः ॥१७॥
तदात्मना विहितमिहातिदुष्कृतं कथन्तरामपवरितुम्प्रवर्त्तसे ।
निवेद्य स्वकृतिमथो स्वजिह्वया सुखेन च श्रय निजदीर्घजीवितम् ॥१८॥
रुषा ज्वलन्नथ परुषं जगाद स प्रलोकयन्नयनरुचाभिकल्पया ।
विलोहिताकुलमुखमण्डलोद्गतं निदाघजं जलमिव तत्समुद्वहन् ॥१९॥
द्रुतोच्चलत्पवनविधूतपल्लवां लतामिवाधरपटिकां विकम्पयन् ।
भटैरसौ सभयमदृश्यत श्रिया परेतराडिव कुपितः कृपाच्युतः ॥२०॥
विरम्यतामलमनधीतचर्चया न कामये भवदुपदेशकौशलम् ।
अलं वयं स्वगतहिताहितान्वये निशाचरा न खलु विचारदर्शिनः ॥२१॥
भृतिप्रियाः प्रकुरुत दास्यवश्यतां प्रतिध्वनिं श्रयत नृपान् प्रविभ्यतः ।
अधीनता हरति विवेकदृश्वताम् ततोऽप्यधोजनिरजनि प्रसाधनम् ॥२२॥
अधोभवा दधति भवादृशा भयं तथाविधान्मरणनिदानवस्तुनः ।
महात्मनां भवति चिरन्तु मादृशां ततोऽधिकं भयमिह मानदूषणात् ॥२३॥
अमानिनः कथमिव जानतां क्रियत् सतां चिरं प्रसरति मानगौरवम् ।
किरातजा गजजनिमौक्तिकावलीं क्षिपन्त्यमी कठिनफलाप्तिशङ्कया ॥२४॥
सतां सभा चरति सतां समर्थनम् सुदुर्जनो जनयति तत्प्रपीडनम् ।
सुधाकरं शिरसि दधाति शङ्करस्तमुत्तमं ग्रसति च सिंहिकासुतः ॥२५॥

यथा नृप॰ सचिवगणोऽपि तादृशस्तथा भटा नृपपदलेहकुक्कुराः ।
सभासदः सदृशतमा हृपत्समा हिताहितप्रवचनमूकतामिताः ॥२६॥
बलाधिकश्चिरगर्भिमानदूषितो वनान्तरे पशुपतिरेव भूपतिः ।
करी चरः करनियता मृगादना मनीषिणी सचिवलि जम्बुकावली ॥२७॥
अलं तथा कृपणतया ममाधुना यथा सता सितपद्वी न शोभते ।
कुनायके पतितपुरे निपीदतः फलं यथाकृतमचिरं प्रजायताम् ॥२८॥
निशम्य तां धनपतिवाचमुद्धता महीपतेरपि सुतरां विलज्जितोम् ।
न्यपीपतन्नथ तममी तमोगृहे सहैव तद्दुहितृपतिश्च सत्वराः ॥२९॥
धरागृहे तिमिरमयं निपेत्यतां यथाकृतं फलमपि साधु भुज्यताम् ।
तवासुभिर्वहिरनिलो विवर्द्धयताम् इति क्रुधा रचितगिरः प्रतस्थिरे ॥३०॥
भटेष्वथो तिमिरगृहे निपात्य तौ भृशक्रुधा समभिगतेषु पद्धतिम् ।
दिनात्यये त्रुटितकरो दिवाकरः क्रुधा ज्वलन्निव समभूद् विलोहित॰ ॥३१॥
तदन्तरे तिमिरततिः प्रभाविनी विनाकृता दिनरुचिलेशमात्रया ।
प्रदीपकश्च तिलवमात्रवञ्चिता निशामुखे तिमिरमयाद्वयं व्यधात ॥३२॥
अथामिते प्रसरति नैशतामसे मलीमसे धनपतियुग्ममानसे ।
विकल्पत॰ समुदियाय जल्पना क एव नो भवति पुरा समाश्रय॰ ॥३३॥
विरोधिता भटनिचया दुरुक्तिभिर्गृहे च नावुपगतमद्य लोप्त्रकम् ।
खलीकृतः सचिवगणोऽपि हा हतम् निराश्रयाः कमिह समाश्रयामहे ॥३४॥
इयं निशा यमभयदा विभाति नो यदत्यये श्वसितमियान्महानिलम् ।
श्ववायसैर्वपुरपि खण्डयिष्यते तुषानलैश्चिरमथवा प्रधक्ष्यते ॥३५॥
प्रवासिनोः स्वजनवियोगदुःस्थयोर्गृहस्थयोर्भवनकथान्तराश्रयत् ।
ततस्तयोर्नयनजलान्यसुस्रुवन कलावतीपतिरथ वाचमाददे ॥३६॥
प्रिये प्रियं वहसि गृहे मनोरथैरहं पुनर्यमविषमा दशां श्रये ।
कलावति क्षपयसि कालमाकुला निशाक्षयः सकलमलं विधास्यते ॥३७॥
चिरं यथा भवसि तथैव तिष्ठतात् श्रुतिं मनो प्रविशतु वृत्तमत्र न ।
त्वदन्तरे नवनवनीतमेदुरे तदाहतिः कुलिशनिपातनाधिका ॥३८॥

पतिव्रता नियमवती चिरं सती सतीयशः सितकर निर्मलं श्रये. ।
सता नये हृदयमियं प्रवञ्चतो सुरद्विजे भव विनता गमातृका ॥३९॥

स्मृतिं चिरात् परिहर नो हृदि स्थितां
विलोचनं सलिलभृतञ्च मा कृथाः ।
स्मृतिर्यदि प्रचरति मानसे तदा
विदेशगौ पतिपितरौ प्रचिन्तयेः ॥४०॥

इतः परं तव मुखचन्द्रदर्शनं न सम्भवेदिति मरणात् प्रलापनम् ।
अयं न त नयनपथातिथिः पुरा भवत्यहो विषमदशासमन्वयात् ॥४१॥
अहो महातिमिरमये महीगृहे स्वविग्रहोऽप्ययमनुपाहितग्रहः ।
समन्ततो विदशति कीटसञ्चयः सुखं न च श्वसितुमलं मुहूर्मुवत ॥४२॥
सुतापते प्रियतम पुत्र जीवसि प्रदृश्यसे न खलु समीपतः स्थितः ।
करौ पदे निगडसुसंयतानि नो विमुक्तये क्षमिव वरं वृणीमहे ॥४३॥
इतीदृशं विलपति वाष्पसङ्कुलं वणिग्वरे दुहितृपतिः शुचाकुलः ।
न वाङ्मयं श्रयितुमलं स मूकवत् नदीं दृशोः समसृजदेव केवलाम् ॥४४॥
तदा बहिः पथि पथिकः पटुस्वरं सुगीतिकां मधुरपदामुदाहरत् ।
शिवाश्रयं श्रय भुवि सत्यमुत्तमं तमो दमो लघु भविता निरन्वयम् ॥४५॥
इयं नवा गगनभवेव देववाक् मरुद्गता श्रुतिमविशद् विशोः क्रमात् ।
तृषातुरे मधुरसुधेव तर्पणी तयोः स्मृतिः समजनि सत्यगोचरा ॥४६॥
अमानिशामनु सकलां सद्दिग्भ्रमो गमागमौ पथि पथिकः समाश्रयन् ।
यदारुणद्युतिनिचितां पुरोदिशं समीक्षते स खलु विलक्षणः क्षणः ॥४७॥

समुच्चलद्विपुलतरङ्गसङ्कुला
तरौ यदा सलिलतलं दिदृक्षते ।
तदात्मना पटुतरताविकाशमाद्
असौ स्थिरा कथमिव नास्तु शान्तिदा ॥४८॥
अथाम्बरात् पवनपथागतां गिरं
समादरात् सपदि निपीय वैश्ययोः ।

हताशता समपगता स्वजीवने
    तपात् परं भुव इव वर्षणोद्यतात् ॥४९॥
वणिग्वरस्तदनु जगाद सादरं
    शृणोषि किं प्रियतम दैवभाषितम् ।
प्रसेदुषि प्रबलतमो विलीयते
    न किं स्मृतं सकरुणसत्यभास्करे ॥५०॥
कलावती विमलकलानिधेः समा
    समुद्गता यदुपचितानुकम्पया ।
यतो वणिग्विधिरपि साधितोदयः
    स विस्मृतो नियतिवशाद्वियत्समाः ॥५१॥
न तत्र स प्रभवतु भक्तिरुत्तमा
    कृतज्ञता किमिति मया विसर्जिता ।
ततो महाकलुषभृतोऽद्य तावती
    सुदुर्दशा समुपनता विपाकतः ॥५२॥
अहो महान् मम हृदि मोहकालिमा
    यदागमात् समगत सत्यविस्मृतिः ।
स्वदेशतः प्रवसनगत्युपक्रमेऽ
    प्यसौ मया न बत समर्चितो हरिः ॥५३॥
कलावती स्मरति समातृका नवा
    रमाधवं सुललितसत्यविग्रहम् ।
अथान्यथा किमिति शुभं समीशुषो
    स्वमन्दिरे विहरति भाग्यसम्पदा ॥५४॥
रमापते परमगते नमोऽस्तु ते
    कुरु क्षमां चिरविनते दशाहते ।
विमोहितो ननु तव मायया परं
    यदाचरं न मम ततोऽपराद्धता ॥५५॥

नमः पुरश्चरणतले च पृष्ठतो
नमस्तथा कमलजनेत्र पार्श्वयोः ।
अधो नमो दयित तथोर्ध्वभागतः
विदिक्षु ते रुचिररुचे नमोनमः ॥५६॥
त्वमादितः सृजसि जगद्रजोमयः
स्थितिं तथा रचयसि तस्य सात्त्विकः ।
तमोमयः प्रलयनये प्रवर्तसे
गुणत्रयीमय विभुता तवाद्भुता ॥५७॥
रविर्भवन्नवनितले जनानिमान्
प्रमोदयन्नयसि मुहुः सजीवताम् ।
सरोवरे कमलकुलं विकाशयन्
जडे तथा प्रभवसि चेतने स्फुटम् ॥५८॥
सुधाकरः सितसुधयाऽम्बरं भुवं
लतातृणस्तवकतरुप्रसूनकम् ।
सरोवरं सरितमनूपसैकतम्
सिताखिलं जनयसि जीवतृप्तये ॥५९॥
पयोनिधिं नयसि विवृद्धपूरतां
हिमांशुभिः स्नपयसि शस्यसञ्चयम् ।
क्षपातमः क्षपयसि देव सर्वतः
विशेषतः सितयसि हर्म्यमालिकाम् ॥६०॥
समीरणो विहरसि गन्धमेदुरः
गृहे गृहे कुसुमवने चलज्जले ।
विलासिनां श्रमक्लमनाश्च तृप्तये
त्वया विना क इव धृतोद्यमोऽसमः ॥६१॥
उषाच्छविः प्रचितविहङ्गमस्वरा
पुरोमुखे स्मितसुभगा सुकौतुका ।

# श्रीसंस्कृतसाहित्यपरिषत्पत्रिका

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| August, 1942 | १८६४-शकीये श्रावणे २५श-वर्षस्य ४र्थ-संख्या | Vol. XXV No. 4 |


## दार्शनिकसिद्धान्त-भेदबीजत्रयम्


[ निबन्धकः—श्रीविधुभूषण-न्याय-तर्कतीर्थः ]


आरभ्यते यतो विश्वं यद्रूपैः परिणम्यते ।
विवर्त्तते पुनर्यस्मिन् वन्दे तमजमीश्वरम् ॥

विदितमेवैतन्मनीषिणां यद् विविधवैचित्र्यपरिपूर्णस्याचिन्त्यनिर्माण-कौशलस्यास्य जगतस्तत्त्वपरिस्फुटनोन्मुखानि दर्शनशास्त्राणि कार्यतत्त्व-विज्ञानस्य कारणतत्त्वविज्ञानसापेक्षत्वेन जगन्मूलतत्त्वनिर्णेतुकामानि,सुतरामेव प्राधान्येन कार्यकारणतत्त्वविचारमाश्रित्य प्रवर्तितानि चेति । कार्यकारण-तत्त्वपरिशीलनतत्पराणाञ्च दर्शनशास्त्राणां कार्यकारणतत्त्वभेदमुपजीव्य सत्यपि बहुधा सिद्धान्तभेदे प्राधान्येन कार्यकारणयोरात्यन्तिको भेदः, कार्यकारणयोर्भेदोऽभेदश्च, कार्यकारणयोरात्यन्तिकाभेदश्चेति पक्षत्रयमवलम्ब्य प्रवर्तितास्ते ते सिद्धान्तास्त्रिधैव भिद्यन्ते, व्यपदिश्यन्ते चारम्भवादः, परिणाम-वादो विवर्तवादश्चेति संज्ञात्रयेण ।

तत्र "कारणादत्यन्तं भिन्नं युगपत्मिलितकारणकलापाज्जायमानं कार्य-मुत्पत्तेरूर्ध्वमसत्, लब्धजन्म च सत्त्वमाश्रयन्नाशानन्तरमप्यसत्त्वमेव भजते

स्वव्यतिरिक्त-किञ्चित्कार्यत्वे च कारणानामपि पूर्वोक्त एव पन्थाः, तद्-वैपरीत्ये च सत्तासातत्यमेव तेषां, कार्येभ्योऽत्यन्तभेदश्चे"ति आरम्भवादिना सिद्धान्तः। समवाय्यसमवायि-निमित्तेति संज्ञया त्रिधैव कारणभेदस्तेषाम्। तत्र च यदाश्रित्य समुत्पन्नं कार्यं यदेवाश्रित्य समवतिष्ठमानं पुनरपाये च यस्मिन् विलीयते तदेव तत्कार्यं प्रति समवायिकारणम्। कपालमाश्रित्य समुत्पन्नो घटः कपाले किल वर्तमानः पुनस्तत्रैव नाशे विलीयते इति घटं प्रति कपालस्य समवायिकारणता। तादात्म्यसम्बन्धावच्छिन्न-कार्यता-निरूपितकारणत्वं समवायिकारणत्वमिति फलितार्थः।

समवायिकारणे, समवायिकारणसमवायिकारणे वा समवस्थितं तत्कार्यजनकं कार्यद्रव्यनाशजनक-स्वापायं यत् कारणं तदेवासमवायि-कारणम्। घटं प्रति तत्सामवायिकारणकपालप्रत्यासन्नः कपालकपालिकयोः संयोगस्तथा घटरूपं प्रति घटीयरूपसमवायिकारणीभूतघटस्य समवायि कारणे कपाले प्रत्यासन्नं कपालरूपञ्चासमवायिकारणमिति द्रष्टव्यम्। कार्यैकार्थ-कारणैकार्थान्यतर-प्रत्यासत्त्या समवायिकारण-प्रत्यासन्नमात्मविशेष-गुणभिन्नमसमवायिकारणमिति निर्गलितार्थः।

समवाय्यसमवायिकारणभिन्नं कारणं निमित्तकारणम्। यथा घटं प्रति दण्डादयः। कारण-सामान्यलक्षणन्तु "कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्य-समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्व"मित्यारम्भ-वादिनां सिद्धान्तः।

कारणज्ञानाधीनत्वात् कार्यज्ञानस्य, निखिलकार्याणामेतत्त्रितय-कारण-जन्यत्वादारम्भवादिमते कार्यस्वरूपविज्ञानाय समभिव्याहृत-कारणत्रयानु-शीलनमावश्यकम्। एतन्मते कार्येभ्योऽत्यन्तभिन्नं कारणम्। कार्यकारणयो-रुत्पत्तिप्रतीतिभेदाद्, ध्वंसप्रतीतिभेदादाधाराधेयव्यवहारभेदात् प्रयोजनभेदाच्च भेद इत्यारम्भवादिनां सिद्धान्तः। तथाहि—

कपालोत्तरोत्पत्तिप्रतीतिविषयत्वाद् घटस्य कपालभिन्नता, यो यदुत्तरो-त्पत्तिप्रतीतिविषयः स तद्भिन्नस्तदुत्तरोत्पत्तिप्रतीतिविषयपटवदिति निय-

मात्। एवं कपालकालीनध्वंसप्रतीतिविषयत्वादपि घटः कपालाद् भिद्यते, यो यत्कालीनध्वंसप्रतीतिविषयः स तद्भिन्नस्तद्घटकालीनध्वंसप्रतीति-विषय-तत्पटवदिति नियमात्।

तथा कपालाधिकरणक-प्रतीतिविषयत्वादपि घटः कपालाद् भिद्यते, यो यदधिकरणक-प्रतीतिविषयः स तद्भिन्नः, भूतलाधिकरणकत्वप्रतीतिविषय-रासभवदिति व्याप्तेः। एवं कपालस्य घटसम्बन्धि-यत्किञ्चिदसाधारण-प्रयोजननिर्वाहायोग्यत्वादपि घटः कपालाद् भिद्यते। तथा ह्येकैकासाधारण-प्रयोजननिर्वाहकत्वमेकैकवस्तुनः। दृश्यते च तन्तुना सीवनं, पटेन प्रावरणं, घटेन जलाहरणमित्यादि। जलाहरणादिप्रयोजनासाधकत्वात्कपालस्य घटेन च तन्निर्वाहाद् घटः कपालाद् भिद्यते इति सिद्धमेव। एवञ्चेत् कार्यकारणयोरात्यन्तिको भेदः सिध्यत्येव।

उत्पत्तेरूर्ध्वमप्यसदेव कार्यमित्यारम्भवादिनां सिद्धान्तः। उत्पत्तेः प्रागनुपलभ्यमानत्वादेव तदानीमसत् कार्यमिति स्थितम्। सत्त्वस्य चोपलब्धिः सर्वत्रैव दृष्टा लोके। "सदपि नोपलभ्यते" इति विरुद्धमेतत्, न हि जातुचिदपि विद्यमानेषूपलब्धिकारणकलापेष्वनुपहतेन्द्रियैः कैश्चित् प्रमातृभिरनुभूयते कार्यमुत्पत्तेरूर्ध्वमित्यसदेव तदानीं कार्यम्।

नचोत्पत्तिपूर्वमपि कारणात्मकत्वमेव कार्यस्य, स्फुरदूरूपस्य चोपलब्धि-योग्यतया तदानीमनभिव्यक्तरूपस्य विशेषतोऽनुभवाभावेऽपि नासत्त्वं कार्यस्येति वाच्यम्—तदानीमपि प्रेक्षावद्भिः कार्यसंज्ञयाऽव्यपदिश्यमान-त्वात्। यदि ह्युत्पत्तेः प्रागपि कपाले घटसत्त्वमानुभविकन्तर्हि तदानीमपि घट इति व्यपदिश्येत। कारणव्यापारसापेक्षोत्पत्तिकत्वादप्यसदेव कार्य-मुत्पत्तेः प्राक्। न च पुरुषप्रयत्नमन्तरेण कुत्राप्युत्पादो वस्तूनामानुभविको दृष्टो वा। सिद्धवस्तु हि नाम न शक्यते कयापि कृत्या पुनरुत्पादयितुं कार्यस्य चोत्पत्तिपूर्वमपि सत्त्वस्वीकारे तस्य सिद्धत्वात्तदुत्पादिका पुरुषकृतिर्निरर्थिकैव स्यात्। कृतेर्नियतवैयर्थ्यं च तत्र पुरुषप्रवृत्तिरपि न स्यादिति महान् व्याघातः।

एवं विनाशानन्तरमपि कार्यमसदनुपलभ्यमानत्वात्, अनुपलब्धेश्चासत्त्व-

प्रयोजकत्वं किलात्यन्तप्रसिद्धं लोके। कार्यनाशानन्तरं तत्कार्यसम्बन्धस्य-साधारणप्रयोजनसाधनानर्हत्वात् समवायिकारणस्य तदानीं तस्मिन्नेव विलीनमपि तत्कार्यमित्यप्यपास्तं, न हि घटनाशानन्तरमतिप्रखरसूर्य-मरीचिसन्तापेन पिपासितानामप्यम्बुसंग्रहणार्थं दृश्यते कपालग्रहणप्रवृत्तिः। एवमेव कार्यकारणयोर्भेदः कार्यस्योत्पत्तेः पूर्वमसत्त्वञ्च प्रतिपादितं आरम्भ-वादिभिः।

इत्थञ्च निरूपितकार्यकारणतत्त्वैः प्रतिपादिताखिलवस्तुस्वरूपैर्जगन्मूल-निदानपरिशीलनचतुरैरारम्भवादिभिर्दृश्यादृश्य-निखिलजन्यवस्तुजातहेतुत्वे-नाङ्गीकृतेभ्यः पार्थिव-जलीय-तैजस-मारुत-परमाणुभ्यो द्व्यणुकादिक्रमेणा-कीटपतङ्गमाब्रह्मस्थावरान्तं निखिलं जगदुत्पद्यते। महत्त्वाणुत्वादिपरापर-विरुद्धधर्मपुरस्कारेण परमभेदमावहतां मेरु-सर्षपादीनां तत्तदवयवपरिमाण-तारतम्यसाधकोपादान-सामग्रीवैलक्षण्य-सम्पादनार्थं तत्तदवयवविभागः कल्प-नीयः, तद्विभागस्यानन्त्ये च मेरु-सर्षपादीनां तुल्यपरिमाणापत्तिरिति विभागस्य विश्रामः क्वचिदङ्गीकर्तव्यः, यत्र च विभागपर्यवसानं स एव परमाणुरिति सिद्धान्तीकृत्य तत्परमाणुभ्यो जगदुत्पत्तिस्वीकारादेवैतन्मता-श्रयिण आरम्भवादिसंज्ञया व्यपदिश्यन्ते॥

( क्रमशः )

# संस्कृत-नाटकानि

( पूर्वानुवृत्तिः )

[ निबन्धकः—वि. कृष्णस्वाम्ययज्वार्यः ]

सम्पादितप्रवेशाधिकारश्च गद्यं क्रमेण पद्यानि पृष्ठतः कृत्वा परमं प्राधान्य-माससाद। सम्भाषणपद्धतिरेव नाटकस्य नाटकतां निर्वाहयतीति तस्या गद्यप्रयोगायत्ततया नाटकं सम्पूर्णमपि गद्याधीनशोभं विपर्यस्थदिति विमर्शकानामुक्तिस्समीचीनैवेत्यवहितमनसां प्रत्यक्षमेव।

गद्यभागस्य संमेलनादेव नाटकेषु रामणीयकमवतरति। इतिवृत्तस्य प्रतिपादनमपि गद्यशैलीमङ्गीकृत्य नितरां मनोहारितां भजते। गद्यभाग-संभाषणानामनुपनिबन्धे नाटके कथाकथनमतीव दुष्करमुपजायेत। श्रव्यकाव्येष्विव कवेरेव कथावर्णनेऽनधिकारात्। पात्रमुखेनैव प्रचलितायाः कथायाः प्रतिपादनीयतया सम्भाषणानुगुणस्य गद्यस्य दुष्परिहरत्वात्। ग्रीकसाहित्ये तु केवल-गीतपद्यात्मकानि नाटकान्युपलभ्यन्ते। एतदेव प्रायो नाटकानां ग्रीकदेशीयानां मूलस्वरूपं संभाव्यते। एतादृशमेव नाटकरूपमस्माकं संस्कृतसाहित्येऽपि प्रथममाविर्भूतं स्यात्। परन्तु तादृशानां नाटकानामनुपलम्भादत्राऽस्मि विषये चर्चा नान्तमधिगच्छति। एतावता च गद्यविहीनानां नाटकानां संभवेऽपि तेषु रामणीयकं न कथञ्चिदपि रसिकलोकसाक्षिकमंगीकर्तुं शक्यमिति सिद्धम्। अत एव गद्यप्रयोगस्यैतावत्प्रामुख्यमाधुनिका अभ्युपगच्छन्ति। अधुना हि केवलगद्यात्मकानि नाटकानि नानाभाषासु व्यवहारगोचरासु प्रतिदिनमसंख्याकानि निर्मीयन्ते। यदि संस्कृतभाषाकवयोऽपि संप्रदायाभिमानं दूरतः परित्यज्य, प्राचीनानुसरणमवश्यकर्तव्यमित्यन्धविश्वासं निराकृत्य, लाक्षणिकानामतिकठिनान्नियमानतिलंघ्य स्वतंत्रविचारेषु प्रवृत्ताः, युक्तायुक्तान्यात्मप्रत्ययेन परीक्षमाणाः पाश्चात्त्येष्विवानेकेषु देशेषु भारतेऽपि निरङ्कुशतामात्मीयां सार्थकयन्तो निरमास्यन्त रसज्ञबहुमान्यानि नूतनरीतिकानि नाटकानि, सत्यमेतावता कालेन भाषान्तरीयाणीव संस्कृतवाणीनिबद्धान्यपि नाटकानि केवलगद्यात्मकानि परमानन्ददायीन्युपालप्स्यन्त। वस्तुतस्तु संस्कृतभाषायामधुना गद्यपद्योभयमिश्रितान्येव नाटकानि दृष्टिपथमवरोहन्ति। तेषु कानिचिन्नाटकान्यभिनयार्हाणि प्राचीनयुगेऽपि रङ्गमञ्चस्य परिचयमवापुः। कानिचित्तु महाकाव्यानीव पठनमात्रेणानन्दं जनयितुं क्षमन्ते, न तु तेषां समग्ररूपेणाभिनयः शक्यो भवति। भवभूतेर्महावीरचरितम्, मुरारेरनर्घराघवमित्यादयो ग्रन्था अत्रोदाहरणतामर्हन्ति। एषु च गद्यापेक्षया पद्यानामेव बाहुल्यमुपलभ्यते। एतदपि

पाश्चिकमेतेषामभिनयानर्हतायां कारणमित्यपि संभावयितुं शक्यम्। परन्तु नाटकैरेतादृशैरपि रसोत्पत्तिर्निर्बाधैव। नृत्यगीतयो रसपरिपोषकतायामनु-भविष्यामपि रसोत्पत्तावुभयोरप्येतयोरावश्यकत्वमित्यनियमात्। अत एव श्रव्यकाव्यादपि रसानुभवः प्रत्यक्षसिद्धः। रसोत्पत्तौ कारणानि हि संनिवेशविशेषाणां समीचीना संघटना। पात्राणामौचित्यसीमानतिलङ्घिना-वाचार-व्यवहारौ रमणीयरूपेण चित्रितौ, एतेषामुपकल्पने कविना प्रदर्श्यमाना प्रतिभा, वर्णनाचातुरी, विषयनिरूपणसरणिः कथाकथनशैली च। एतानि हि समुदितानि साधनानि चमत्कारमावहन्ति, रसं परिपुष्यन्ति। अतो गद्यसंमिश्रणं रसपरिपोषकमात्रमिति सारदर्शिनामनुभवः। सुगमश्चायं विषयो न युक्तिभिरुपपादनीयः।

नाट्यांशाः भरतशास्त्रे नाट्यसम्बद्धा विषया विस्तरेण प्रपञ्चिता इत्यावेदयामः। तानिमान्विमर्शनिकषोपले रपीक्षितान्विषयान् संगृह्णाति स्म भरतः—रसा भावा ह्यभिनया धर्मी वृत्तिप्रवृत्तयः।

सिद्धिः स्वरास्तथाऽतोद्यं गानं रङ्गश्च संग्रहः" (६-१०)

इति। तत्र रसभावाभिनयानां स्वरूपं लाक्षणिकैः सम्यग्विमृश्यैव सार्वजनीनतामभ्यगच्छत्। धर्म्यादिशब्दास्तु न तथा प्रसिद्धार्थका इति तेषामत्र किञ्चिदिव निरूपणमावश्यकम्। प्रसङ्गाद्रसादीनामपि पाश्चात्य-विमर्शकोचितया सरण्या निरूपणं न्यायप्राप्तमनुष्ठीयते।

रसभावाः नाटकेषु रसस्यैव प्राधान्यम्। न केवलं नाटकेषु, अपि तु समग्रे साहित्यप्रपञ्चे रस एव प्रधानतया परिगण्यते। सद्यः परनिर्वृतिर्हि काव्यपठन-फलमित्युपन्यासो रसोत्पत्तिमृते नैव सम्भवति। काव्यशब्दस्य चात्र साहित्यमेवार्थः। रमणीयार्थप्रतिपादक-शब्दमात्रस्य काव्यत्वावधारणात्। तथा च काव्यसामान्यस्य व्यंग्यार्थप्राधान्ये सत्ये-वोत्कृष्टत्वमित्याशमानैर्नवीनै रस एव वाक्यार्थत्वविश्रान्तिकल्पनात्तत्प्रधानं काव्यमिति पर्यवसितम्। नाटकादिषु रूपकेषु तु विशेषतो रसप्राधान्य-मेव। रूपकाणामात्मा रस इत्यपि स्वीकर्तुमुचितम्। रसनिष्पत्तावायत्ता

हि रूपकाणां रमणीयता। क्रमविकासदशामनुगच्छद्भिरुद्दीपनोन्मुखैर्विभावादिभिस्सामग्रीभेदैस्संभृतपोषस्य रसस्य प्रादुर्भावादानन्दोल्लासः। इममेवार्थं "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि"ति भरतसूत्रमपि प्रमिमीते। दशरूपकादावपि विभावादिभिः स्वादुत्वमानीयमानः स्थायी भावो रस इत्युपपादितम्। भावस्य स्थायित्वञ्च सजातीयविजातीयानभिभूततया यावदनुभवमवस्थानमेव। तत्र च रसोत्पत्तौ विभावसामग्री कारणम्। सा चालम्बनोद्दीपनभेदाद् द्विविधा। अभिव्यज्यमानरस्याश्रयत्वादालम्बनपदवाच्यो नायकादिस्तत्र समवायिकारणम्। आलम्बनगतस्य रूपयौवनादेर्गुणस्य, यौवनारम्भगोचर-हावभावादीनां तच्चेष्टानाम्, नूपुराङ्गदहारादिरूपस्य प्रसाधनोपकरणस्य, मलय-मारुतवसन्तकान्तिप्रमुखाणां तटस्थपदार्थानाञ्चोद्दीपनविधया रसपरिपोषकतया तेऽपि विभावपदेनाभिधीयन्ते। उद्दीपनविभावसमावेशादुद्भूतभावव्यञ्जकाश्च कटाक्षवीक्षणादिका व्यापारा अनुभावतया व्यपदिश्यन्ते। सात्त्विकभावाश्च स्तम्भप्रलयरोमाञ्चादयः। यद्यप्येतेषामपि भावप्रदर्शनात्मकत्वाविशेषादनुभावेषु परिगणनं न्याय्यं, तथाऽपि सत्त्वगुणप्रकाशकत्वान्नायकोत्कर्षप्रत्यायकतया भेदेनानुकीर्तनम्। निर्वेद-ग्लानि-शङ्कादिकास्तु व्यभिचारिणस्त्रयस्त्रिंशदिति प्रतापरुद्रीये। गुरुदेवनृपपुत्रादिविषयकरतेरपि भावेष्वेवानुप्रवेशाच्चतुस्त्रिंशदिति रसगङ्गाधरे। इमे संचारिणो भावा इत्यपि व्यपदिश्यन्ते। एषां संयोगान्मिथस्समावेशाद्रसनिष्पत्तिरिति सूत्रार्थः। संचारिणो भावा मनोविकाराः, चित्तवृत्तिविशेषाः इत्यादिरूपेण स्वरूपानुकीर्तनपरैः शब्दैर्व्यवह्रियन्ते। एतेषामभिनयात् सामाजिकानां हृदयान्तराले सुप्तगुप्ताः स्थायिनो भावा उद्बुध्यन्ते, तदैव च रसप्रादुर्भावो भवति। स्थायिनश्च भावा नवेति केचित्। अत एव शान्तरस इति व्यवहारमनुरुध्य नवरसानां परिसंख्यानमुपपद्यते। शृङ्गारातिरिक्तानां रसत्वमेव न प्रामाणिकमित्यपि कश्चित्। एवमनेके मतभेदास्सन्ति। विस्तरस्त्वन्यत्रानुसन्धेयः। भरतस्तु शान्तं रसेषु न पर्यगणदिति परमवधातव्यम्।

नाट्यस्यात्मा रसः, अभिनयस्तु शरीरम्। शरीरपरित्यागे स्वयंप्रकाशस्याप्यात्मनो यथा न कार्यजननसामर्थ्यं तद्वत् अभिनय-शून्यानां रसानामानन्दजनकता नास्त्येव। अभिनयेनैव वा रसस्योत्पत्तिरिति स्वीकारे तु नाटकेष्वभिनयस्य प्राधान्यमसाधारणमिति व्यक्तमेव। अत एव भरताचार्येण स्वकीये नाट्यशास्त्रेऽभिनयविचारायैव बहवोऽध्याया उपनिबद्धा दृश्यन्ते। सोऽयमभिनयश्चतुर्धेति नाट्यस्य विशेषप्रतिपादनावसरे निरूपितम्। तत्राऽऽङ्गिकोऽप्यभिनयस्त्रिविधः शारीरो मुखजश्चेष्टाकृतश्चेति। पाणिपादादीनामंगोपांगानामवस्यन्दनमेव शारीरा-भिनयः। तस्मिन्नेव मुखस्य वक्रतादिभिरवस्थाविशेषैरुपादीयमानोऽभि-नयो मुखज इत्यभिधीयते। नृत्तविशेषाश्च चेष्टाकृतेष्वन्तर्भवन्ति। नाटके-षूपयुक्ता भाषाः, तासामुपयोगे नटैरनुसृता शैली, भाषणरीतिः, इतिवृत्तम्, छन्दांसि, गुणालङ्काराश्च वाचिकाभिनयसामग्रीष्वन्तर्भवन्ति। नाट्यप्रदर्श-नोपयोगिनी नेपथ्यरचना भूषणधारणादिकञ्चाहार्याभिनयः। तत्र च नेपथ्यं पुस्तालङ्कारांगरचना-सज्जीवभेदाच्चतुर्विधम्। वाहनविमानध्वज-कवचनदीपर्वतादिकं प्रकृतिदृश्यजातं पुस्त-नामकम्। माल्यमाभरणादिकञ्चा-लङ्कारः, वर्णरचनाऽनुकार्यरामादिवेषधारणरूपांऽगरचना, नाट्ये प्रदर्शनाय कृतकतया सज्जीकृताः प्राणिनः सज्जीवाः। एतदुपाधिभेदादाहार्याभिनय-स्यापि भेदस्सूपपादः। सात्त्विकाभिनयस्तु स्तम्भाद्याश्रयः प्रागेव निरूपितः। एवं सामान्यतश्चतुर्विधोऽप्यभिनयः सामान्यचित्रभेदात्पुनर्द्वेधाविभागमर्ह-तीति भरतशास्त्रे निरूपितम्। सामान्याभिनयप्रकरणे नायकभेदाः, तेषा विशेषाः, तेषां शीलस्वभावादिकं पारिपार्श्विकसूत्रधारादीनां लक्षणानि च निरूपितानि। अत्रैव रंगे प्रत्यक्षतोऽभिनयार्हाणि तदनर्हाणि च वस्तूनि विविच्य प्रपञ्चितानि। स्नान-प्रयाण-मरणादीनां प्रत्यक्षतो दृश्यमानानां रसोत्-पत्तिविप्रतीपतया तेषामभिनयस्य प्रतिषेधोऽनुशिष्टः। सुरतादीनामपि सतां जुगुप्सावहत्वाद्दुष्टानां कामोद्रेकसम्पादकत्वाच्च प्रदर्शनमनुचितमेव। सज्जनहेयस्याश्लीलस्याभिनयानर्हत्वात्। चित्राभिनयप्रकरणे च बाह्यवस्तूना-

मांगिकैस्सङ्केतैः संसूचनक्रमो विवृतः। एवमांगिकव्यापाराणामान्तरभाव-सूचकतां प्रदर्श्य नदीपर्वतादीनां बाह्यदृश्यानां नेपथ्ये परिकल्पनासम्भवा-द्रंगमंचे प्रदर्शनमशक्यमिति तेषामप्यांगिकैश्चेष्टाविरूपैरभिनयैस्सङ्केत-द्वारा सूचनं साध्यमिति भरतमुनिरनुशशास। आकाश-वचनं, जनान्तिक-मपवारितमित्येतेषा विस्तरोऽपि सप्रमाणमस्मिन्नेव प्रकरणे भरताचार्ये-णोपान्यस्यत।

धर्मी नाम नटानां संप्रदायः। तथाहि। नाटकेषु स्वगत-भाषणमप-

धर्मी　　वारितादिकञ्च तत्र तत्र कविभिर्निबध्यते। स्वगतादीना-मश्रवणे सामाजिकानामानन्दानुभवो विहन्येत। तदर्थं सामाजिकानां कर्ण-पुटप्रवेशक्षममथ चोच्चैरुच्चारणे पार्श्ववर्तिनो नटान्तरस्यापि स्वगतश्रवणं दुर्निवारमित्यतः कथमुपपत्तिः? एतादृशस्थलेषु स्वगतादीनामश्राव्यतया प्रति-षिद्धानामुच्चैरुच्चारणेऽपि नटान्तरेण तदाकर्णनं नास्तीति संप्रदायमनुरुध्या-भिनीयते। यथाहि यशसोऽरूपस्यापि शुक्लरूपता कविसमयप्रसिद्धेत्यङ्गी-क्रियते तद्वदेव स्वगतादावपीति बोध्यम्। संगीतमिश्रितमेव पद्यं गानीय-मित्यपि सांप्रदायिको नियमः। नर्तनं (Dance) विना नटस्य रंगे प्रवेशोऽपि भरतमुनिना निषिद्धः। पात्रान्तरेण येन केनापि प्रकारेण सूचितस्यैव पात्रस्य प्रवेशस्संघटनीयः। सम्भाषणदशायामपि कटाक्षवीक्षणादिभि-र्भावान्तरमभिनेतव्यमित्येवमादयो नाटकीयनियमाः संप्रदायाभिधाने धर्मिष्व-न्तर्भवन्ति।　　( क्रमशः )

---

अधस्तन-कवीनां कालिदासादीनामुपरि

## कविमुनेर्भासस्य प्रभावः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीदुर्गादास-गोस्वामी काव्यतीर्थः बी. ए. ]

भरतः। ( सावेगं ) सूत! चिरं मातुलकुल-परिचयादविज्ञातवृत्तान्तो-ऽस्मि। श्रुतं मया दृढमकल्यशरीरो महाराज इति। तदुच्यताम्—

पितुर्मे को व्याधिः

सूतः। हृदयपरितापः खलु महान्

भरतः। किमाहुस्तं वैद्याः

सूतः। न खलु भिषजस्तत्र निपुणाः।

भरतः। किमाहारं भुङ्क्ते शयनमपि

सूतः। भूमौ निरशनः

भरतः। किमाशा स्याद्

सूतः। दैवं

भरतः। स्फुरति हृदयं वाहय रथम्॥

श्रीमतो भरतस्य दारुणा रथगतिर्वर्ण्यते—

द्रुमा धावन्तीव द्रुतरथगतिक्षीणविषया
नदीवोद्वृत्ताम्बुर्निपतति मही नेमिविवरे।
अयव्यक्तिर्नष्टा स्थितमिव जवाच्चक्रवलयं
रजश्चाश्वोद्भूतं पतति पुरतो नानुपतति। —प्रतिमायां

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत्।
प्रकृत्या यद् वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किञ्चित्क्षणमपि न पार्श्वे रथजवात्॥ —शाकुन्तले

अत्र भासकविना प्रयुक्ते शिखरिणीवृत्तेऽप्यनुवृत्तं कालिदासेन। व्यसनं परिहर्तुकामो भासकविर्महीपतेर्दशरथस्योपरमं रामादिनिर्वासनञ्च विलम्बेन भरताय कौशलेन निवेदयाञ्चकार। शाकुन्तले कालिदासेनापि समय एषोऽनुसृतः। आकस्मिकेनाभीष्टतमेन शकुन्तलासमागमेन दुष्मन्तः कदाचिन्मुह्येदपि, इति कृत्वा सहृदयतमेन महाकविना कालिदासेनेनादृशो घटनानुबन्धा आविष्कृता यच्छनैः शनैर्विदितात्मजप्रियतमावृत्तान्तस्य प्रणयिनो दुष्मन्तस्य क्रमादुन्नीयमानप्रियतमेन सार्द्धं सङ्गतमभूत। अपिच, या खलु मुद्राभङ्गी भासेनात्यादृता, सापि कालिदासेन सादरं परिगृहीता। तदुदाहरणं यथा—

उदयनवेन्दुसवर्णावासवदत्तावलौ वलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥

अस्मिन नान्दीश्लोके उदयन-वासवदत्ता-पद्मावती-वसन्तकाना मुख्य-नाटकपात्राणां नामानि कौशलेन निवेशितानि ।

सर्वदमन, शकुन्तलावण्यं प्रेक्षस्व । —शाकुन्तले

अत्र शकुन्त इति च्छेदो व्यक्तः, परन्तु शकुन्तलेति नायिकानाम-संसूचनमपि कृतम् ।

अन्यत्र,

अत्र रामश्च सीता च लक्ष्मणश्च महायशाः ।
सत्यं शीलञ्च भक्तिश्च येषु विग्रहवत् स्थितम् ॥ प्रतिमानाटके
दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत् समागतम् ॥ शाकुन्तले

रेणुः समुत्पतति लोध्रसमानगौरः
सम्प्रावृणोति च दिशः पवनावधूतः ।
शङ्ख-ध्वनिश्च पटहस्वनधीरनादैः
सम्मूर्च्छितो वनमिदं नगरीकरोति ।

प्रविश्य

लक्ष्मणः । जयत्वार्यः । आर्य !

अयं सैन्येन महता त्वद्दर्शनसमुत्सुकः ।
मातृभिः सह सम्प्राप्तो भरतो भ्रातृवत्सलः ॥ प्रतिमानाटके

विरक्त-सन्ध्याकपिशं पुरस्ताद् यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥

रघु, १३ सर्ग

श्रीमानेष न केवलं द्विजवरो यस्मात् प्रभावो महा-
नाकर्ण्य स्वरमस्य धीरमधुरं चित्रार्पिताङ्गा इव ।

उत्कण्ठरितमिताञ्चिताक्षिवलितग्रीवार्पिताग्रानना-

स्तिष्ठन्त्यस्खवशाङ्कयष्टि सहसा यान्तो मर्मैते हयाः ॥ कर्णभारे

तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भ इवावतस्थे ।

कुमारसम्भवे ३य सर्गे

मुक्तेषु रश्मिषु निरायतपूर्वकाया निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।

आत्मोद्धतैरपि रजोभिरलङ्घनीया धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥

शाकुन्तले

सुरद्विपास्फालनकर्कशाङ्गुलिर्मया कृतार्थः खलु पाकशासनः ।—कर्णभारे

ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः ।

कुमारसम्भवे ३य सर्गे

एकाग्राङ्गुलिधारितोन्नतमुखो व्यासः स्थितो विस्मितः ।—ऊरुभङ्गे

मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान् व्यनैषीत्— कुमारसम्भवे

यस्मै प्रकामीकृतमूर्द्धजानि रणं प्रविष्टान्यवरोधनानि ।—ऊरुभङ्गे

विललाप विकीर्णमूर्धजा वसुधालिङ्गनधूसरस्तनी ।—कुमारसम्भवे

धृतराष्ट्रः । पुत्र ! दुर्योधन ! अष्टादशाक्षौहिणी-महाराज । क्वासि ।

ऊरुभङ्गे

वाच्यस्त्वया मद्वचनात् स राजा............रघुवंशे १४ सर्गे

जनक ।........ अपि कुशलं प्रजापालमातुः ।—उत्तरचरिते

आसन्नभूमिचपलः परिवर्तमानो योग्योपदेशमिव तस्य रथं करोति ।

पञ्चरात्रे

कण्वः ।......सुशिष्यपरिदत्ता इव विद्या अशोचनीयासि संवृत्ता ।

शाकुन्तले

कूलद्वयं हन्ति मदेन नारी कूलद्वयं क्षुब्धजला नदीव ।—अविमारके

व्यपदेशमाविलयितुं किमीहसे जनमिमञ्च पातयितुम् ।

कूलङ्कषेव सिन्धुः प्रसन्नमम्भस्तटतरुञ्च ॥—शाकुन्तले

सोऽपि तावदस्माकमधन्यतया केनाप्यर्थसंचिन्तनेन अन्यादृश इव संवृत्तः ।
—अविमारके

अवहीनेषु अस्मासु तेन सा तापसकन्यका अस्माकमधन्यतया दृष्टा
—शाकुन्तले

ही ही, एषोऽत्रभवान् कार्मुकजनवर्णकेनानुलिप्त इव पाण्डुरभावेनेत एवागच्छति । अथवा सर्वमलङ्कारो भवति सुजनानाम् ।—अविमारके

किमिव हि मधुराणां मण्डनं नाकृतीनाम् ।—शाकुन्तले

स्थूलोऽपि हेतुः करतालनादः सञ्जायते सङ्कुलयत्नेन ।—अविमारके

तालै: शिञ्जावलयसुभगैर्नर्तितः कान्तया मे ।—मेघदूते

उलूकस्वरश्रवण-भीतया कान्तया परिष्वक्तः खल्वयं तपस्वी—अविमारके

त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः

सोत्कम्पानि प्रियसहचरीसम्भ्रमालिङ्गितानि ।।—मेघदूते

न तथा रत्नमासाद्य सुजनः परितुष्यति ।

यथा तत् तद्गताकाङ्क्षे पात्रे दत्त्वा प्रहृष्यति ।।—अविमारके

आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् । -- मेघदूते

शुकशारिकापि व्याख्यानमेव कथयितुमारब्धा । मम निर्वेदमजानती भूतिकशारिकापि सर्वलोकवृत्तान्तं कथयिष्यामीत्यागता ।—अविमारके

—— ( क्रमशः )

सुन्दरदेव-संकलितः

# सूक्तिसुन्दरः

( पूर्वानुवृत्तिः )

[ डाः श्रीयतीन्द्रविमल-चतुर्धुरीण-सम्पादितः ]

आलिङ्गन्तो वसुधां निजखुरदलितामिवा[नु]नेतुमग्रो ।

वदनविनिर्गतचरणा इव लक्ष्यन्ते जवादश्वाः ॥१२६॥

इति सू० हयवर्णन-तरङ्गः ॥ कालिदासस्य ॥

॥ अथ दुन्दुभिः ॥

पारीन्द्राणां धुरीणैरवनिधरगुहा-गर्भतः प्रोच्छलद्भिः
स्वापभ्रंशापराध-प्रचलितनयन-प्रान्तमाकर्ण्यमानः ।
स्वत्प्रस्थानान्तरुद्यत्प्रलयजलधरध्वानधिक्कारधीरो
दुग्ध-क्षीराम्बुधीरो जगति विजयते दुन्दुभिध्वनादः ॥१२७॥

गङ्गाम्भसि सुरत्राण तव निःसाण-निस्वनः ।
स्नातीवारिवधूवर्ग-गर्भपातनपातकी ॥१२८॥ कस्यापि ॥

ब्रह्माण्डं प्रविखण्डय भूधरगुहासुप्तान् हरीन् बोधयन्
गर्भान् वैरिवधूव्रजस्य नृपते निष्पात्य हा पातकी ।
कीलालं परिशोष्य च प्रतिभटानां तेजसा तेऽद्भुतं
रोद्धुं विष्णुपदं स्पृशत्यधिपयोराशि प्लुतो दुन्दुभिः ॥१२९॥

गुन्दरस्य ॥

इति सू० दुन्दुभिवर्णनम् ॥

॥ अथ वीरवाक्यम् ॥

नो तावत् कलयामि केलिकृपणे वामभ्रुवो लोचने
तावन्न प्रणयावलीढ-मनसः पश्यामि मातुर्मुखम् ।
यावत्तार-कुठारपातनिपतत्प्रत्यर्थिपृथ्वीपति-
भ्राम्यत्स्वर्णकिरीटबद्धशिरसो भ्राम्यन्ति नो फेरवः ॥१३०॥

समरविहरदस्मत्खड्गनिष्पातभिन्न-
प्रतिनरपतिभिन्नाद् भास्वतो बिम्बमध्यात् ।
वयमहह धरायां पातयामः पताका-
वसनपवनलोलं वारि दिव्यापगायाः ॥१३१॥

निष्पीत कलशोद्भवेन जलधौ गौरीपतेर्गङ्गया
होतुं हन्त वपुर्ललाटदहने यावत् कृतः प्रक्रमः ।

तावत्तत्र मया विपक्षनगरीनारीदृगम्भोरुह-
द्वन्द्वप्रस्खलदस्रवारिपटलैः सृष्टाः पयोराशयः ॥१३२॥ भानुकरस्यैतौ ॥
कौक्षेयोच्छिन्नशत्रुद्विरदघनघटाकुम्भसम्भूतमुक्ता-
तारास्तोमप्रकीर्णे वियति विलसतो (?) बिम्बमिन्दुम् ।
कृत्वा हास्ये (?) न यावद्धृतरिपुवनिताविप्रयोगैकमित्रां
रात्रिं धूलिप्रकीर्णे रणभुवि कलये जीवितेनास्तु तावत् ॥१३३॥
सुन्दर-देवस्य ॥

इति सू० वीरवाक्यतरङ्गः ॥

॥ अथ खड्गवर्णनम् ॥

क्षोणीकाम निजाम तावकभुजं लब्ध्वा भुजङ्गेश्वरं
जानीमः करवालकालभुजगी किं नाम गर्भिण्यभूत् ।
यच्छिन्नेभकपोललोलविगलन्मुक्ताकलापच्छला-
दच्छाण्डपरम्परामधिरणं सूते स्फुरन्ती मुहुः ॥१३४ भानुकरस्य ॥
भूभृन्मौलितटीषु दर्शितसमारम्भोऽयमम्भोधर-
स्त्वत्खड्गः प्रतिपक्षपङ्कपटलं प्रक्षालयन् धारया ।
युद्धक्रुद्ध-विरुद्धसिन्धुरदलद्गण्डस्थलप्रस्खलन्-
मुक्ताभिः करकाभिराशु समरक्षोणीतले वर्षति ॥१३५॥ गणपतेः ॥
संग्रामक्षोणिदृश्यच्चपलरिपुचमूसिन्धुकीलालमाला
पीत्वा कालः कृपाणोऽम्बुद उपसमरं गर्जते वीरघोषैः ।
वर्षत्युद्दामगौरं दिशि दिशि तव भो कीर्तिवारीभकुम्भ-
प्रोद्यन्मुक्ताहिमाश्मच्छुरितमरिनतेर्माणिक क्षोणिपाल ॥१३६॥
वाह्यामारा अजीमा अवनयुवतयो हावनो दोङ्कुनाली
अच्यो अच्योनु याम्या इति अयि अयि गेथोल हे कालदाढ ।
चोह्री माह्यारिणी गुर्जर-नवमहिला मेरिशा अम्मलीला
तैलङ्ग्यो वीक्ष्य खड्गं तव दधति गिरो भूपतेर्भूविहस्ताः ॥१३७॥
सुन्दरदेवस्यैतौ ॥

भूभृन्मौलितटीषु वर्षति महाधाराधरेऽस्मिन्नरो
जाता भूप सरस्वती विजयिनी कल्लोलिनी पावनी ।
श्रीमत्साहिजहां ब्रवीमि तदिदं माहात्म्यमस्याः कथं
यस्या मज्जति पङ्कजीयति शिरस्तन्मूर्ध्नि जोऽलीयति ॥१३८॥

हरिनारायण-मिश्रस्य ॥

चूडापीडाभिरामः स्फुरदुरुमणिभिर्मुद्रिकाकल्पसूत्रै-
र्दोर्दण्डः कुण्डलीन्द्रस्तव जयति जगन्मण्डलाधार एषः ।
क्षीरभ्रान्त्याऽरिकीर्तिं सपदि समुदिता पातुकामः प्रसर्प-
ज्जिह्वामुच्चैः किमेनां चपलयति चमत्कारिणीं खड्गधाराम् ॥१३९॥

चन्द्रचूडस्य ॥

मन्ये मृत्योः सपत्नी जगति सुविदिता कालकूटस्य कन्या
धात्री कर्कोटकस्य स्मरणभयकरी किञ्च वज्रस्य माता ।
कल्पान्ताग्नेः पुरन्ध्री प्रभवति भगिनी भीषणा कालरात्रे-
र्दूतीयन्ते कृपाणी सुरपुरसुदृशां रामचन्द्र क्षितीश ॥१४०॥ हनूमतः ॥

देव त्वत्करपद्मकोशविलसन्मत्तालिमालामसिं
वैधव्योद्भटधूमकेतुमपरे त्वद्वैरिवामभ्रुवाम् ।
वेणीं कालवधोः प्रतापहुतभुग्धूमञ्च केचिज्जगु-
र्मन्ये कालभुजङ्गलोलरसना हालाहलव्यापृता ॥१४१॥ सुन्दरदेवस्य ॥

देव त्वं मलयाचलोऽसि भवतः श्रीखण्डशाखी भुज-
स्तस्मिन् कालभुजङ्गमो निवसति प्रौढः कृपाणच्छलात् ।
एष स्वाङ्गमनर्गलं रिपुतरुस्कन्धेषु संघट्टय-
न्नूर्ध्वव्योमविसारिनिर्मलयशोनिर्मोकमुन्मोचति ॥१४२॥ हनूमतः ॥

इति सु० खड्गवर्णनतरङ्गः ॥

(क्रमशः)

जनप्रियस्त्वमसि चिरं रमापते
गतिः परा त्वमगतिकस्य देहिनः ॥६२॥
हुताशनो वहसि हविर्वषट्कृतं
हिताय नः सुरसविधं मखे मखे ।
सुरात्मना तदपि सुधासमं पिबन्
स्वतृप्तिवत् प्रथयसि लोकमङ्गलम् ॥६३॥
बहिःस्थितो जठरगतोऽपि भेदतः
पचन्नयं परिमितमन्नपानकम् ।
शरीरिणा रसपरिपुष्टधातुभिः
वपुः प्रपालयसि मुहुः परिक्षयात् ॥६४॥
तपात्यये तपनज-तापतापितां
वसुन्धरां जलधरवारिवर्षणैः ।
शमं प्रलम्भयसि जगद्धितोदयः
दयामयो भुवनशिवस्थितीच्छया ॥६५॥
ततः शरत्समयजनिश्रिया युतां
धरामिमां विकसितकाशहासिनीम् ।
विपक्त्रिमानिलचलशस्यसम्भृतां
त्वमीशिषे कुसुमितसप्तपर्णिकाम् ॥६६॥
मधौ ततो मधुकरगीतसंस्तुतां
पिकावलीं मधुरकलैरलङ्कृताम् ।
मनोहरप्रसवलतावियीजितां
प्रवर्तयन् जयसि विलासदेवनाम् ॥६७॥
सरोजिनीं सरसि तथा कुमुद्वतीं
नवस्मितां जनयसि पूतसौरभाम् ।
ततः स्वयं मधुकरमूर्तिमाश्रितः
कलस्वनैः कलयसि तत्र चेतनाम् ॥६८॥

यमो भवन् यमयसि जीवसंहतिं
न वश्यता क इव तवात्र सेवते ।
सुदुष्कृते त्वमसि यथा प्रमर्दनः
तथा मृदुः सुकृतवति प्रमोदनः ॥६९॥
अचेतनं शुभमशुभञ्च यत् कृतं
न साधु तत् स्वफलनियन्त्रणक्षमम् ।
त्वमेव तन्नियमनकृत्यमङ्गलं
निषेवसे श्रुतिगुणपालनव्रती ॥७०॥
गुणत्रयं जडमपि निष्क्रियात्मना
यदिच्छया मिलितमदीपि सृष्टिकृत् ।
विशेषदः स विहितकारिणा सतां
त्वमुत्तमः पुरुषविशेष ईश्वरः ॥७१॥
परिप्लुते प्रलयपयोधिवारिणा
जगत्त्रये निपुणतया प्रबोधभाक् ।
पितामहक्रमि-मधुकैटभासुरौ
यमातिथी त्वमसि विधाय भूतिदः ॥७२॥
ततः परं खलमहिषं सुरद्विषं
पराभवन्नुपगतशक्तिविग्रहः ।
सवासवैरमरगणैः प्रसादितः
शिवां स्थितिं जगति रातामसाधयः ॥७३॥
समुद्धतं भटनिचयं विनिघ्नता
हिमाचले वपुरनघं समीयुषा ।
तथासुरौ विषमनिशुम्भशुम्भकौ
त्वया हतौ जगदहितप्रशान्तये ॥७४॥
कलिन्दजा-पुलिनकदम्बमूलतः
कराधरोपचरितवेणुगीतकैः ।

गृहाद्बहिष्कृतवृषभानुनन्दिनी
विसर्जितस्वगृहनया त्वया पुरा ॥७५॥

यदूर्जितं यदपि च कोमलं परं
जगत्त्रये तव विभवः स सुन्दरः।
जले स्थले वियति वने समीरणे
रणाङ्गने प्रणयियुगे च युज्यसे ॥७६॥

शिशोः स्मितं कमलसुकोमले मुखे
प्रियोत्तमा-प्रथमसलज्जभाषितम्।
अलौकिकप्रणयनयः सुतादिके
त्वया विना किमपि न मे प्रतीयते ॥७७॥

सनातने सकलमनोनियन्त्रणे
तिरोहितं कथमपि मे न वाञ्छितम्।
कृपानिधे विदधय तूर्णमापदं
न ते पदं क्षणमपि विस्मरिष्यते ॥७८॥

गतं तमः समुदितमिन्दुमण्डलं
सुधासितं हृदयमिदं ममाधुना।
न कौशिको रटति समुत्कटं ततः
तव स्मृतं चरणसरोरुहं यतः ॥७९॥

इदं वपुः प्रियदुहिता कलावती
सुतापतिः प्रियवनिता तथापरम्।
पदाम्बुजे तव निखिलं निवेद्यते
यथोचितं भुवनपते विधीयताम् ॥८०॥

कृपारुणं किमिति विलोचनं विभो
त्वयाधमे मयि निहितं कृपानिधे।
न बन्धनं तव करुणानिबन्धनं
न सूयते दिवसकृता तमस्ततिः ॥८१॥

प्रणंस्यसे नतशिरसा पदाम्बुजे
त्वमेव मे भवसि दृढावलम्बनम् ।
अतीतवत् कुरु मयि साम्प्रतं कृपाम्
असाम्प्रतं स्वजनगता कठोरता ॥८२॥
सुतापते प्रणिपत सत्यपादयोः
दयोदधिः स खलु विधास्यते विधिम् ।
यतः शुभं सकलमितो भविष्यति
प्रणंक्ष्यति प्रकटविपत्पराक्रमः ॥८३॥
इति विविधवचःस्रजः परस्तात्
नतशिरसा हरिरेव सत्यरूपः ।
प्रमुदितमनसा वणिग्युगेन
प्रणिपतितो विजहौ समिद्धरोषम् ॥८४॥

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये वणिकृतमोगृहवासो नाम षोडशः सर्गः ।

## सप्तदशः सर्गः

लीलावती लक्षपतेः प्रिया सती सुतामुपादाय सुदेवकेतने ।
हिरण्मये सत्यकृपाप्रभावतः स्थिता न भूयः सुखमाप मानसे ॥१॥
स्वमन्दिरं भस्म कृतं हविर्भुजा धनं यदासीत्तदहारि तस्करैः ।
खलीकृतैः स्वीयजनैः कुवृत्तिभिः हृतश्च किञ्चिन्नहि किञ्चन स्थितम् ॥२॥
विदूरतः स्वामिसुतापती गतौ न चापि सन्देशलवः प्रलभ्यते ।
कथं नु ताविध्यवबोधवासना सदैव सच्चेतसि दुःखमक्षिपत् ॥३॥
द्विजः सुदेवो जनकोपमश्चिरं कलावतीं मातृयुताञ्च सान्त्वयन् ।
उवाच वत्से भव सुस्थिरान्तरा कथन्तरां मज्जसि दुःखसागरे ॥४॥
न त्वं यथाकालमुपैषि भोजनं न चावगाहं विदधासि नित्यशः ।
कृशा तनुस्ते वितनोति मानसं विषादमक्ष्णोरपि वाष्पनिर्झरः ॥५॥

विधीयते नालकराजिसंस्क्रिया सुगन्धतैलं मनसोऽप्यगोचरः ।
प्रक्षालिता कञ्चुलिकापि दूरतः कृता क्षमाता च विषादभागिनी ॥६॥
न दर्पणेषु प्रतिबिम्बमात्मनः प्रपातयन्ती स्वमुखं निरीक्षसे ।
विलुप्तमेव प्रतिबिम्बलम्भकं सुभागधेयं तदुपाश्रितं पुरा ॥७॥
न सेवसे माल्यमालतोत्सवं न पुष्पितामाश्रयसे च वल्लरीम् ।
न वा प्रसूनस्रजमङ्गसङ्गिनीं करोषि सौभाग्यमदानुसारिणीम् ॥८॥
अनारतं लोचनवारिनिर्झरः कपोलयोर्वा मलिनाङ्कमङ्कते ।
त्वदीयनेत्रानुगमेन वञ्चितं वृथा न नीलं किमु भाति कज्जलम् ॥९॥
अलक्तकं रागमुपैति ते पदे तथाधरं न त्वयका स पूर्य्यते ।
ततो ध्रुवं कोपकृतेव रक्तता पदे पदे तस्य जनैर्विलोक्यते ॥१०॥
पुरा मयालोकि वपुस्त्वदानघे विशेषभूषाविधिनातिसुन्दरम् ।
तदेव जीवत्पतिकापि किं मतो मुधैव नालङ्कुरुषे विषादिनी ॥११॥
त्वदीयमाता मम पुत्रिका यथा ततो हि न त्वं किमु नप्त्रिकासि मे ।
यदेतदास्ते मम हैममन्दिरं धनं जनाश्चेति समग्रमेव ते ॥१२॥
सुता मदीया सुसखी तवाधुना दिवानिशं त्वं ह्यवती भवत्प्रिया ।
तया कथं बालजनोचितक्रिया विधाय नाद्यानुमिहार्हसि प्रियम् ॥१३॥
निरन्तरं ते मलिनां मुखश्रियं निरीक्ष्य सा ताम्यति साम्यमीयुषी ।
कथं नु तस्या बत दीनतामिमाम् उपेक्षसे सौहृदधर्म्मकोविदा ॥१४ ।
यथा गृहे मूर्त्तिमतीव पार्व्वती मदीयपत्नी हृदि सुनकोमला ।
नवकन्दिवं सा समुपैति सर्वतः सुरक्तमार्तं युवयोः पदे पदे ॥१५॥
इमे जना ये मम मन्दिरे स्थिताः प्रभावतो वां सुतरां वशीकृताः ।
निदेशलाभात् किल पूर्व्वमेव ते कृतावधाना वितरन्त्यभीप्सितम् ॥१६॥
प्लुष्टं हुताशेन गृहं न शोच्यतां न चापि चौरादिहृतार्थसञ्चयः ।
कृतानुसारेण हिताहितागम कदापि नातिक्रमितुं सु शक्यते ॥१७॥
क्षणेन राजा स्वकृतस्य कर्म्मणः प्रभावतो भिक्षुपदं प्रपद्यते ।
तथैव भिक्षुः सुकृतेन देशितं महीपसिंहासनमाशु सेवते ॥१८॥

यत्राद्य भीमोद्धतवीचिमालिनी स्रोतस्विनी सर्पति दर्पशालिनी ।
तत्रैव काले कियति क्षयं गते वनं पुरं वा परिदृश्यते नवम् ॥१६॥
पक्षे सिते यः परिपूर्णतां गतः क्रमेण सोऽयं बहुले सुधाकरः ।
प्रतिक्षपं क्षीणतनुः प्रजायते न यात्यमैकान्तत एव तत्करम् ॥२०॥
पुनः क्रमेणास्य विधोः कलावली विवर्द्धते चारु कुतोऽपि निर्गता ।
दिने दिने यात्युदयं रविस्तथा क्षयं परेद्युः पुनरेव दीप्यते ॥२१॥
रमा प्रमाणं कुरुते न सत्कुलं न वा चरित्रं स्वपदव्यवस्थितौ ।
जलोद्भवा जाड्यमुपागता भृशं गुणेषु नैवास्ति विचारणक्षमा ॥२२॥
समं यदुच्चैःश्रवसा पयोनिधौ चिराय वासं कमला समाश्रयत् ।
ततो हि तत्पुच्छविलोलनादसौ स्वचापलं तावदशिक्षताक्षतम् ॥२३॥
न दुःखमायाति विलोचनाश्रुभिः न वा प्रहर्षं समुपैति सुस्मितैः ।
किं कालकूटेन सहैव तिष्ठतः तथाविधा निष्ठुरता व्यवस्थिता ॥२४॥
रथस्य चक्रं परिवर्त्तते यथा यथा घटीयन्त्रघटी नतोन्नता ।
यथा रवेरस्तमनोदयौ तथा नरस्य भाग्यं परिवर्त्ततेऽन्यथा ॥२५॥
पुनर्भवेदेव गृहं तथा धनं पिता पतिश्चापि तवागमिष्यतः ।
गतौ विदूरे धनलाभकाम्यया तदेकमत्रावत एव तौ स्थितौ ॥२६॥
मयाद्य साध्यं सति सत्यपूजनं प्रदोषकाले प्रतिमासिकोत्सवम् ।
स याच्यतां भक्तियुतेन चेतसा स एव सर्वं वितरिष्यति प्रियम् ॥२७॥
त्वमेव सत्यस्य परं कृपाफलं न किं ततः प्रत्ययिनी चिरं भवेः ।
स किं न कर्त्ता भुवि सर्व्वशक्तिमान सभक्तिसेवापरितोषितान्तरः ॥२८॥
नियोजयेतद्गृहमार्जने करौ तदीयपूजाकुसुमाहृतौ तथा ।
स्तवानुवादे रसनां रसोचितां विलोचने तत्प्रतिमावलोकने ॥२९॥
मनोऽन्यशून्यं विनिवेश्य भक्तितः मनस्विनी सत्यपदाम्बुजद्वये ।
तदीयमाहात्म्यकथाश्रुतौ श्रुतिं निवेशयेथा दुरितोपशान्तये ॥३०॥
सभक्तिचेता जननीसमन्विता श्रीसत्यदेवस्य पदाम्बुजान्तिके ।
शिरः स्वकीयं विनमय्य कामनां निवेदयेथाः प्रियवस्तुगोचराम् ॥३१॥

प्रसादमादाय शिरोगतं ततः कृतार्थतां लम्भयतं जनिं युवाम् ।
प्रहीयते हन्त स चेदवज्ञया तदा स कोपज्वलितो भविष्यति ॥३२॥
निशम्य तां रम्यपदां सरस्वतीं द्विजैकसारां विबुधैरुपासिताम् ।
विचिन्त्य भव्यं सुतरां ननन्दतुः कलावती तज्जननी च मण्डने ॥३३॥
पुराकृतञ्चापि विभाव्य दुस्तरं श्रीसत्यदेवास्मरणोत्थपातकम् ।
तदेव च व्यापदि हेतुतां गतं मनोविकारं सुमहान्तमीयतुः ॥३४॥
कलावती विप्रसुदेवभाषितं तदापि कर्णं ध्वनितं व्यकल्पयत् ।
प्रियस्य चिन्तां नवयौवनक्रमा समाश्रयन्ती विमनायिता स्थिता ॥३५॥
न सा प्रदातुं वचनोत्तरं तदा शशाक नानाविधभावविह्वला ।
शुभाशया लक्षपतेः प्रिया ततः सगद्गदं भीतहृदाभ्यभाषत ॥३६॥
पितस्तवेदं वचनं यथामृतं तथापि नो तृप्यति चञ्चलं मन· ।
गृहप्रदाहो यदि सत्यकोपतः तदा हितं स्यात् कथमन्यवस्तुषु ॥३७॥
यथा स तुष्टः कुरुतेऽखिलं हितं रुष्टस्तथानिष्टमशेषमाहरेत् ।
ततः कथं मङ्गलमङ्ग दूरतः सुतापतेः पत्युरपि प्रमीयताम् ॥३८॥
महत् कृतं पातकमेव पूर्वतः समेधितं सत्यकथास्मृतिं विना ।
फलन्तु तस्यातिकठोरमुद्भवेत् विषद्रुमाच्चूतफलं न जायते ॥३९॥
न शोच्यते दग्धगृहं मयाधुना धनञ्च दूरे हृतमत्र तस्करैः ।
न शात्रवं स्वीयजनैरुपासितम् विभावना स्वान्तमितान्यगोचरा ॥४०॥
पतिव्रतायाः प्रथमावलम्बनं पतिर्यथा नैव तथापरः कश्चित् ।
स चेद् विपन्नो बत सत्यकोपत· तदा कथं जीवतु तत्प्रिया सती ॥४१॥
विपत्तिरेकैव जने न जायते सदैव सम्प्रापयते परःशताः ।
गृहप्रदाहाद्विक्रमोक्षितं ततो विपत्तिमन्यां विशतीव दुःसहाम् ॥४२॥
पतिव्रता नेच्छति राज्यसम्पदं पतिच्युता स्वीयसुखैषिणी सती ।
मुहूर्त्तमात्रां तददर्शनं गता बिभेति तन्मङ्गलभङ्गभावनात् ॥४३॥
पदे तदीये यदि कण्टकक्षतिः सदा हि तस्याः कुलिशाक्षतं मनः ।
जगत् समग्रं समुपेक्षते सती न पत्युरल्पामपि दुःखदुर्विधाम् ॥४४॥

सती च पत्युर्विरहं सुदुःसहं शुश्रोपचारेऽपि विसोढुमक्षमा ।
जुहोति देहं यदसौ हुताशने तदेव तस्मादिह वक्ति लाघवम् ॥४५॥
तदद्य पत्युर्हितहानिकल्पना मदन्तरान्तः कुलिशायते भृशम् ।
क वा गतोऽसौ धनवृद्धिहेतवे क वा स्थितो मे दुहितुः प्रियः पतिः ॥४६॥
कलावती चन्द्रकलामलप्रभा प्रसादतो यस्य पुरा किलालभे ।
स दैवयोगात् कुपितः कथं मया विमूढया केन पथा प्रसाद्यताम् ॥४७॥
मृशापचारेण ममैव निश्चितं विहित्रिमं रोषमुपेत्य दुःखदः ।
स यावता कृत्यचयेन लूयते स देव तावान् सदयं निरूप्यताम् ॥४८॥
विहित्रिमे शाश्वतमैत्रशात्रवे विहित्रिमेणैव पथा प्रणश्यतः ।
तदद्य यावद् भवतो निदेशतः श्रीसत्यदेवं चिरमेव पूजये ॥४९॥
गतं गृहं गच्छतु वित्तसञ्चयैः इतो न शोचामि सुतासमन्विता ।
स्वदेशलाभेन पती किलावयोः शुभोत्तरं स्वागतमाशु विन्दताम् ॥५०॥
ततः सुदेवः समुवाच दुःखिता लीलावतीं स्वां तनुजामिवोत्तरम् ।
वधान वत्से हृदयं शमे चिरं पुषाण सत्ये नवभक्तिमात्मनः ॥५१॥
न तत्र विश्रम्भवियोगमाश्रयेः समग्रमेवार्पय तत्पदाम्बुजे ।
स सत्यरूपी भगवानुपासितः यथाभिलाषं सुफलं प्रदास्यते ॥५२॥
समस्तकल्याणकरः सुरेश्वरो विधित्सते मङ्गलमेव सर्वतः ।
यदा यदा पौरुषदोषसन्ततिः रुणद्धि तन्नैव तदा तदाप्यते ॥५३॥
अशेषदुःखान्युपभुज्य साम्प्रतं स्वदोषसीमामसि नूनमागता ।
तावत्समा विस्मरणान्धतामसे निमज्जितो यत्स्मृतिगोचरीकृतः ॥५४॥
न दुष्कृतं यावदुपैति संक्षयं न तावदायाति हितोपदेशकः ।
न वा हितं तेन किलोपदिश्यते नवोपदेशः परिगृह्यते जनैः ॥५५॥
अनिष्टमिष्टस्य वृथैव शङ्कसे तवाधुना पुण्यकृतिः फलोन्मुखी ।
कलावतीं सान्त्वय शान्तकल्मषां कुरुष्व पूर्णं सति सत्यपूजनम् ॥५६॥
इत्येवमुक्त्वा विरते द्विजोत्तमे तमः समुत्सृज्य कलावतीयुता ।
लीलावती भक्तिगृहीतमानसा पदे तदीये स्वशिरो न्यपातयत् ॥५७॥

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| September, 1942 | १८६४-शकीये भाद्रे<br>२५श-वर्षस्य ५म-संख्या | Vol. XXV<br>No. 5 |


अधस्तन-कवीनां कालिदासादीनामुपरि

## कविमुनेर्भासस्य प्रभावः

( पूर्वानुवृत्त. )


[ निबन्धकः—श्रीदुर्गादास-गोस्वामी काव्यतीर्थः बी. ए. ]


अद्वितीयकथासाहित्यकारस्य बाणभट्टस्य कृतौ कादम्बर्यामपि सर्ववृत्तान्तनिष्णातस्य शुकस्य मुखे तावत् कथोपनिबद्धा ।

अपरिमेया अवर्णनीयाश्च वियोगवेदना याः खलु अविमारकेण विसोढास्ता एव मेघदूतस्य नायक-नायिकयोर्यक्ष-तत्प्रियतमयोर्विरहवेदनाप्रसरवर्णने कालिदासस्य प्रेरणां संपादयेयुर्वा ? स्वकीयाऽनुभूतिर्वा मेघदूतरचने हेतुर्भवेत् । अपिच, महाकविः कालिदासो मालविकाग्निमित्रप्रथने प्रतिज्ञायौगन्धरायणात् तथा श्रीहर्षोऽपि रत्नावलीरचनायामस्मादेव प्रेरणां लब्धुमर्हतीति चास्माभिः शक्यं वक्तुम् ।

यद्यपि भासस्य चारुदत्तग्रन्थ एव स्वनामधन्यस्य मृच्छकटिक-प्रकरणस्य बीजं तथापि परोक्तं पूर्वोक्तादनल्पं मधुरं विवृद्ध्या, उत्कर्षेण, कल्पनादिगौरवेण च संस्कृतरूपकेष्वन्यतमं श्रेष्ठमस्तीति सत्यस्य कृते विनिवेदयामः । अभिज्ञानशकुन्तलम्, मृच्छकटिकम्, मुद्राराक्षसमित्येवमादि-नामान्यपि

भासस्वपक्काभिधानानुकरणहेतोरिति वक्तव्यमेव। तत्र च स्वप्नवासवदत्तम्, प्रतिज्ञायौगन्धरायणमित्यादि-नामान्येव प्रमाणम्।

कालक्रमेण जगतः परिवर्तमाना चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्ति।

—स्वप्नवासवदत्ते

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण—मेघदूते

वासवदत्ता ( आत्मगतम् ) दुष्करं खल्वहं करोमि। इयमपि नामैवं मन्त्रयते—स्वप्नवासवदत्ते।

शकुन्तला (जनान्तिकम्) हला प्रेक्षस्व, नलिनीपत्रान्तरितमपि सहायमपश्यन्ती आतुरा चक्रवाकी आरटति। दुष्करमहं करोमि—शाकुन्तले।

प्रविश जाते! प्रविश। तपोवनानि नाम अतिथिजनगृहम्।

—स्वप्नवासवदत्ते

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः—इत्यादि। उत्तररामचरिते।

भवतु, भवतु आर्ये! विश्वसिहि। अमुना बहुमानवचनेन अनुगृहीतोऽस्मि।—स्वप्नवासवदत्ते।

भवतु। भवतीनां सूनृतयैव गिरा कृतमातिथ्यम्।—शाकुन्तले।

न खलु न खलु उत्सारणा कार्या। पश्य,

परिहरतु भवान् नृपापवादं न परुषमाश्रमवासिषु प्रयोज्यम्।
नगरपरिभवान् विमोक्तुमेते वनमभिगम्य मनस्विनो वसन्ति॥

—स्वप्नवासवदत्ते

यथा सैनिकास्तपोवनं दूरादेव परिहरन्ति, तथा निषेद्धव्याः। पश्य

शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद् वमन्ति॥

—शाकुन्तले

श्रुतिसुखनिनदे! कथं नु देव्याः स्तनयुगले जघनस्थले च सुप्ता।
विहगगणरजोविकीर्णदन्ता प्रतिभयमध्युषिताध्यरण्यवासम्॥

—स्वप्नवासवदत्ते।

तव सुचरितमङ्गुरीय ! नूनं प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु ॥

—शाकुन्तले

अस्तिग्धासि घोषवति । या तपस्विन्या न स्मरसि ।
श्रोणीसमुद्वहन-पार्श्वनिपीडितानि
स्वेदस्तनान्तरसुखान्युपगूहितानि ।
उद्दिश्य मां च विरहे परिदेवितानि
वाद्यान्तरेषु कथितानि च सस्मितानि ॥

—स्वप्नवासवदत्ते ।

कथं नु तं बन्धुरकोमलाङ्गुलिं करं विहायासि निमग्नमम्भसि ।
अथवा—अचेतनं नाम गुणं न लक्षयेन्मयैव कस्मादवधीरिता प्रिया ॥

—शाकुन्तले ।

एवमन्येऽपि बहवोऽनुरूपाः स्थलविशेषाः समुद्धर्तुं शक्यन्ते, प्रबन्धस्य परिणाहभिया तु ते नोल्लिख्यन्ते ।

भासस्य प्रतिमारूपकादवगम्यते यदिदानीन्तनकाल इव तदानीमपि प्रतिमा-संरक्षणशाला (museum) आसन् । भूयस्यो गोचारणभूमयश्च न तदानीं दुर्लभा इति ।

भवभूतिनोत्तररामचरिते तावदालेख्यदर्शनव्यापारो भासस्य प्रतिमा-नाटकान्तर्गत-प्रतिमादर्शनवृत्तान्तमुपजीव्य निबद्ध इत्यपि शक्यते वक्तुम् । अपि च स्वप्नवासवदत्ते निर्वर्तितेनोदयनेन यदर्थप्रत्यभिज्ञा दृश्यते वासवदत्तायाः, तस्यास्तु शकुन्तलाप्रत्याख्यानादूर्ध्वं दुष्मन्तस्योपरि समधिकः प्रभावो व्यक्तः । स्वप्नवासवदत्ते यथा सखीभ्यां गूढमुदयनावस्था निरीक्ष्यन्ते तत्कथाश्च श्रूयन्ते । शाकुन्तलेऽपि तथा राजर्षिणा दुष्मन्तेन शकुन्तलावस्थाः कथाश्चेति सुमहत् सादृश्यमनुभूयते । एवं शाकुन्तलस्य षष्ठेऽङ्केऽपि सानुमती विरह-कातरदुष्मन्तावस्थास्तिरस्करिण्या पश्यन्ती दृश्यते ।

अस्मिन् खलु निबन्धे वक्तव्यमेतदेवास्माकीनं यन्महाकवि-कालिदास-प्रमुखा अप्यनल्पं भासकवेरधमर्णतां गच्छन्ति। नैतत् क्षोदीयान् विषयः। न पुनरिहास्माकं कालिदासादिप्रतिभां वामनीकर्त्तुं कश्चिदाशयः स्पर्धा वा कापि विद्यत इति सहृदयान् प्रति सविनयं निवेद्यते। दुरतिक्रमः खलु महतां प्रतिभाजुषां प्रभावः। अद्यत्वेऽपि दृश्यते यद् विश्वकवेर्बहुशास्त्र-पारदृश्वनो रवीन्द्रनाथस्य प्रतिभामतिक्रमितुं स्वल्प एव मनीषिणः शक्नुवन्ति। नैष दोषः कवीनां मनस्विनाञ्च, कृतित्वञ्च तेषां तत्तद्वस्तूनां स्वायत्तीकरण एवेति बोध्यम्। महाकवयः कालिदासादयोऽपि तद्वन्महाकवे-र्भासस्य प्रभावमतिवर्त्तितुं नाशक्नुवन्निति नैष तेषां दोषः, परं भासाद्यधि-गतवस्तूनां स्वायत्तीकरणेन तेषां काव्यानां परमरमणीयताधायकत्वमेवेति निर्विशङ्कं निवेदयामः। यथा बहिरुपात्तमन्नादिकमजीर्णं सत् पुष्टिं कामपि न कुरुते किन्त्वपुष्टिमेव तथाऽन्येभ्यः सूत्रेभ्यः समाहृतं वस्तु काव्यनाट्या-दिषु प्रयुज्यमानमपि तेषामुत्कर्षं न कमपि करोति, किन्त्वपकर्षमेवेति विदितचरमेवेदं तत्त्वं विपश्चिताम्। अथ सुजीर्णं भवति तत्तदन्नादिकं तदा शरीरस्य परिपोषकतामाधिक्येनोपपद्यते, एवं काव्यादिष्वपीति विज्ञेयम्। महाकवयः कालिदासादयोऽपि भासादिभ्यः समाकलय्य वस्तूनि यानि काव्यानि व्यरचयन् तेषामिदानीमपि म्लानिरुपजायते। परमुत्तरोत्तरं भास्वरतैव पदं लभते। महाकविः कालिदासस्तु भाषानु-कर्त्तॄणां मध्ये विशेषेणास्माकं समालोच्यविषयतामधिगच्छति। स हि स्वकीयसाधनया काव्यपारदर्शितामेतादृशीमविन्दत, यत् सत्यपि तस्मिन् भासादिप्रभावे स पूर्वतनानुत्तमर्णान् दूरमतिक्रान्तवान्। कलावैचक्षण्यादि-काव्यौपयिकीष्वपि ह्यस्य प्रतिभापरिचयं दत्तवानिति नास्ति संशयलेशो विदुषाम्। मेघदूतव्याख्यानावसरे मल्लिनाथसूरिणोक्तं यद् दिङ्नागा-चार्यनामा कोऽपि कालिदासस्य समसामयिकः परुषं कालिदासकाव्यानि समालोचितवान्। तस्यान्यच्छायायोनित्वेन च भृशमधिक्षेपमाविष्कृतवान्। तत्रैवोक्तं यन्निचुलनामा कालिदाससुहृत् कश्चित् कालिदासं सर्वथा समर्थित-

वान्। वयमपि कालिदासपक्षपातिनः। अस्मिन् खलु प्रपञ्चे प्रायेण सर्वेऽपि मनीषिणोऽन्यच्छायाजीविन इति नास्ति कोऽपि संशयावकाशः। अस्मादेव हेतोर्ये खलु कालिदासादीन् खर्वीकर्तुमीहन्ते न ते याथार्थ्यवादिनः। वयमपि महाकवौ भासे श्रद्धातिशयमादधाः, परमस्माकं हृदयोस्तथा प्रीतिः कालिदासमेवाश्रयते। यन्न प्राप्यं कालिदासस्य तत्तु व्रातव्यमेव। केचित् सहृदया 'भासो हासः कविकुलगुरुः कालिदासो विलासः' इत्यत्रत्यं 'कविकुलगुरु'पदं भासायोपायनीकृतवन्तः। सत्यद्रष्टृणा न पुनरस्माकमेतादृशः संस्कारः। कालिदासस्य कृतयोऽस्माभिर्बह्वो कालादेवोपगताः, भासस्य च साम्प्रतमिति न साम्प्रतं कालिदासस्याधःकरणम्। सर्ववादिसम्मततया कालिदासः संस्कृतसाहित्यकर्णधारेषु श्रेष्ठं पदमधिकुरुते, तच्च चिराय निर्दिष्टमिति नास्ति नः सन्देहलवः। यतः स कविवर्यो गीतिकाव्ये महाकाव्ये, नाटके च तुल्यरूपेण कृतकार्यतां प्रादर्शयत्। तथापि वयं नेदं विस्मरामो यन्महाकविः कालिदासो भासस्याधमर्णपदवाच्यतां गतः, तस्मात् काव्यप्रेरणाश्च प्रचुरां लब्धवान्। अर्थविशेषेण भासकविः कविकुलगुरुपदवाच्यतां लभते, भजते च संस्कृतसाहित्योपजीविनां बहुमानश्रद्धादिभरापूरितमत्युच्छ्रितं पदमिति शम्।

---

## दार्शनिकसिद्धान्त-भेदबीजत्रयम्

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीविधुभूषण-न्याय-तर्कतीर्थः ]

अत्यन्तासतो वस्तुनः कदाचिदपि सत्त्वासम्भवादुत्पत्तिपूर्वमव्यक्तरूपेणोपादानकारणे समवस्थितस्य कारणपरिणामतया कारणादभिन्नस्य कार्यस्य कृतिसाध्याभिव्यक्तिरेवोत्पत्तिरित्याख्यायत इति परिणामवादिनां सिद्धान्तः।

१ तत्र सत्त्वं नाम सर्वकालवृत्तित्वरूपमेव। तच्च सत्त्वं वस्तुत्वसमनियतं, नह्यवस्तु सम्भवति, न च वैस्त्वसत्। तत्र द्वेधा खलु सत्त्वमुच्यते, परिणामि

सत्त्वमपरिणामि सत्त्वञ्चेति। यस्य च सतः स्वरूपपरावृत्तिरस्ति तत्र परिणामि सत्त्वं, यथा कदाचित् कम्बुग्रीवादिमदात्मना, कदाचिच्च कपाला-द्यात्मना परिवर्त्तमाने घटादौ। यस्य च सतः कदाचिदपि स्वरूपापरावृत्ति-स्तत्रापरिणामि सत्त्वं, यथात्मनि नित्य-शुद्ध-बुद्ध-मुक्त-स्वभावे। परिणाम-त्वञ्चावस्थातोऽवस्थान्तरग्रहणत्वम्। यथा पिण्डाकाराद्यवस्थातो घटा-कारता मृत्तिकायाः।

कारणमेव कार्यरूपेण परिणमते। अत्यन्तासतां शशविषाणादीनां कदापि सत्त्वासम्भवादुत्पत्त्या च सत्त्वसम्बन्धोपलब्धेः कार्यस्योत्पत्तिपूर्वमपि तस्य सत्त्वं न स्यात्। न हि कयापि कृत्या वस्तुस्वभावो विरुद्धता-मापादयितुं शक्यः। न च स्वभावनीलं वस्तु कृतिशतेनाप्यनीलता-मापद्यते। विरुद्धश्चासत्त्वस्य कार्यस्य सत्त्वसम्बन्धः। तस्मात् प्राग-प्युत्पत्तेः स्वकारणसम्बन्धात् सदेव कार्यम्। स्वकारणसम्बन्धश्च कार्यस्य कथमवगम्यते इति चेत्, कार्यविशेषव्यवस्थातः कारणानामिति ब्रूमः। दृश्यते च तिलेभ्य एव तैलोत्पत्तिर्न तु मार्गपांशुभ्यः। उत्पत्तिपूर्वं तिल-सम्बन्धाभावे तैलानामविशेषात् पांशुभ्योऽपि तैलमुत्पद्येत। एवं तैलार्थिना तिलग्रहणमपि तिलेन तैलसम्बन्धमवगमयति। तिलेन तैलसम्बन्धविरहश्चेद्-विशेषात् तैलमुत्पिपादयिषुणा पांशुरपि गृह्यताम्। न चैवं प्रेक्षावतां व्यवहारो दृष्टो लोके। तस्मात् कार्येण कारणसम्बन्धाङ्गीकारश्चौत्पत्त्या-दुत्पत्तेः पूर्वमपि सदेव कार्यम्।

ननु तैलकारणत्वं न तैलसम्बन्धनियतमपि तु तैलजननशक्तिविशेष-नियतं, शक्तिविशेषश्च न रजसामिति चेत्, उच्यते, कार्यविशेषजनिका सा शक्तिः कार्यमात्रवृत्तिः, कारणमात्रवृत्ति, कार्यकारणोभयवृत्तिर्वा? नाद्यः, उत्पत्तेः पूर्वमपि कार्यस्यासत्त्ववादिनां शक्तिप्रतियोगिकत्वं कार्यस्य न सिध्यति। नापि द्वितीयः पक्षः, शक्तेः केवलकारणनिष्ठत्वे तस्याः कार्येणा-सम्बन्धात् कार्यविशेषजनकत्वं दुर्घटमेव, कार्यसम्बन्धस्यैव तत्तत्कार्य-विशेषजननयोग्यत्वात् शक्तेः कारणमात्रवृत्तित्वे नकिञ्चिदप्यायातम्।

तृतीयः पक्षस्त्ववशिष्यते। कार्यविशेषजननयोग्यत्वनियम-निर्वाहार्थं शक्तेरुभयनिष्ठत्वाङ्गीकारश्चेदवश्यमेव प्रतियोगिविधया कार्यस्य प्रागप्युत्पत्तेः सत्त्वमावश्यकम्, शक्तेः सम्बन्धत्वेन संयोगादिवत् किञ्चिदनुयोगिकत्वस्य किञ्चित्-प्रतियोगिकत्वस्याभ्युपेयत्वात। एवञ्च घटकारणवृत्तिशक्तिर्घटमात्रोत्पत्तिप्रयोजनकत्वेन घटमात्रप्रतियोगिनीति सिद्धम्। एवं हि घटोत्पत्तेः पूर्वं घटः सन्, घटोत्पादकवस्तुप्रतियोगित्वात्, यद् यदुत्पादकवस्तु प्रतियोगि भवति तत् तदुत्पत्तेः पूर्वं सत्, घटोत्पादकसंयोगप्रतियोगिदण्डवदित्यनुमानेन सिद्धमेवोत्पत्तेरूर्ध्वमपि कार्यसत्त्वम्।

ननु प्रागप्युत्पत्तेः कार्यं सच्चेत् तदुत्पादककृतिर्निरर्थिकैव, सिद्धवस्तूत्पादकप्रयत्नस्योन्मत्तकार्यवदुपेक्षणीयत्वाद् न प्रेक्षापूर्वकारिणां तत्र प्रवृत्तिरप्युचितेति चेदुच्यते, कार्याभिव्यक्त्यनुकूलत्वान्न कृतेर्निरर्थकत्वम्। नह्यसदिह कार्यं कृतिसाध्यं, कृतिप्रयोज्याभिव्यक्तिकं हि तत्। निबिडतिमिरापसारणकृत्प्रदीपेन भवनान्तर्वर्त्तिघटप्रकाशनवत् कार्यस्वरूपतिरोधायकावस्थानिराकरणेन कार्यस्वरूपाभिव्यक्तिर्निष्पद्यते कृत्या, न पुनर्गगनकुसुमादीनामिवासतां कार्यवस्तूनां कयापि कृत्या सत्त्वसम्पादनं शक्यम्।

न च कार्याणां सदातनत्वे उत्पत्तेः प्रागपि कथं नोपलब्धिरिति वाच्यम्—प्रतिबन्धकीभूतावरणसद्भावप्रयुक्तत्वात्तदनुपलब्धिः। सत्यपि चाक्षुषप्रत्यक्षयोग्ये वस्तुन्यावरकसत्त्वे प्रत्यक्षाभावो हि कुड्यादिव्यवहितराजदारायदर्शनेषु प्रसिद्ध एव। एवमुत्पत्तिपूर्वमप्युपादानकारणावस्थावृतत्वादेव सतोऽपि वस्तुनो न प्रत्यक्षम्।

ननु मृत्तिकादिष्वनभिव्यक्तरूपेण सतो घटादेरावरकः क इति चेत्? उच्यते, पिण्डाकार-चूर्णाकाराद्यवस्थाविशेषा एव घटाकारावस्थावरकास्तत्र। न हि पिण्डाकाराद्यवस्थाविशेषमन्तरेण मृत्तिका शक्यते विज्ञातुम्, अवस्थाविशेषमनुपादाय वस्तुस्वरूपग्रहणासम्भवात्। वस्तुस्वरूपग्रहणदशायाञ्च गृह्यमाणावस्थाविशेषेण वस्तुनिष्ठा तद्व्यतिरिक्तावस्था प्रतिरुध्यते इति पिण्डाकारेण मृत्तिकोपलब्धिदशायां मृत्तिकानिष्ठापि चूर्णाकारता यथा

नोपलभ्यते तथैव घटाकारत्वमपि पिण्डाकाराद्यवस्थाविशेषप्रतिरुद्धत्वादेव नोपलब्धं, न तु तदसत्त्वनिबन्धना साऽनुपलब्धिरिति ।

नन्वेवं प्रतिबन्धकीभूतावरणापगमे वस्तुप्रत्यक्षस्यैवावश्यकत्वाल्लगुडनिपातादिना मृत्तिकायाः पिण्डाकारावस्थाविनाशानन्तरं घटोपलब्धिप्रसङ्गः, प्रतिबन्धकापगमादिति चेन्न, पिण्डावस्थाच्चूर्णाद्यवस्थानामपि घटस्वरूपावरकत्वम् । न च पिण्डभावविनाशमात्रापेक्षिका घटस्वरूपोपलब्धिरपि तु घटस्वरूपावरकनिखिलावस्थातिरोधायकव्यापारसापेक्षिका सा,—प्रतिबन्धककूटाभावप्रयुक्तत्वात् कार्यस्य । कर्त्रा च कार्यस्वरूपाभिव्यक्तिप्रतिबन्धकावस्थातिरोधायकव्यापार एव निष्पाद्यते, न तु शशविषाणादिवदत्यन्तासतो वस्तुनः सत्त्वसम्बन्धापादकव्यापारः केनाप्यनुष्ठातुं शक्यते ।

स्वकारणे विलय एव कार्याणां विनाशो न तु कार्यध्वंसः सतोऽभावानुपपत्तेः । सत्त्वस्य चाभावविरोधित्वादेकस्मिन् धर्मिणि विरुद्धधर्मद्वयसमावेशासम्भवाच्च सद्वस्तुनो न कदाचिदप्यभावः ।

एवञ्चोत्पत्तेरूर्ध्वमपि सत् कार्यं कारणान्नात्यन्ताभिन्नम् । अत्यन्ताभेदश्च तादात्म्यम् । न च कार्यकारणयोस्तादात्म्यं, भिन्नप्रवृत्तिविषयत्वाज्जन्यजनकभावत्वाच्च । दृश्यते च जलाद्याहरणार्थिनां घटग्रहणे प्रवृत्तिर्न तु मृत्तिकादाने । उभयोस्तादात्म्ये च घटग्रहणमिव मृत्तिकाग्रहणमपि जलार्थिभिः क्रियेत । एवं जन्यजनकभावादपि नोभयोस्तादात्म्यम् । यद् यस्य जनकं तत्ततो भिन्नमिति च नियमः, समुपलक्ष्यते च पुत्रमुत्पादयन् पिता पुत्राद् भिन्न इति । अतो न कार्यकारणयोस्तादात्म्यम् । एवं कार्यकारणयोर्नाप्यत्यन्तभेदः । कार्यसमूहस्यैवाव्यक्तरूपत्वं कारणस्य, न तु कार्यव्यतिरिक्तस्वतन्त्रसत्त्वं कारणस्य । एकमेव हि वस्तु अनभिव्यक्तस्वरूपतया कारणमभिव्यक्तस्वरूपतया च कार्यमिति व्यपदिश्यते इति परिणामवादिनामाशयः ।

( क्रमशः )

अथोत्थिता भक्तिभृता युताञ्जलि-
निवेदयामास सुदेवपादयोः ।
पितस्त्वानर्घवचःपरम्परा-
परायणः को न हितं प्रपद्यते ॥५८॥
तवोपदेशादुपशान्तिमागता
विपत्तिशङ्का पतिपुत्रगोचरा ।
अलौकिकीं शक्तिमुपाश्रितो भवान्
किमन्यथा सत्यकृपा त्वयीक्ष्यते ॥५९॥
स सत्यनारायणमूर्तिमेदुरः
परेश्वरः रत्नोपहिते हिरण्मये ।
त्वदीयवासे निवसन्नहर्निशं
निवेदयत्येव तवोत्तमं महः ॥६०॥
न पूर्वजन्मार्जितपुण्यधन्यता
विना तथा सत्यदयोपजायते ।
ततस्तथा सत्यदयाविलोकनात्
तवानुमेयाऽमलपुण्यसन्ततिः ॥६१॥
तवाकृतिं वीक्ष्य मुनीश्वरोचितां
वचस्तथाकर्ण्य मनःप्रतर्पणम् ।
स्वतः शिरो भूमितलं पदान्तिके
न को विधत्ते तव भक्तिभावितः ॥६२॥
त्वयेरिताः सर्वकथा रसोक्षिताः
स सत्यदेवः कुरुते श्रुतावलम् ।
ममान्तरस्थं भगवत्पदान्तिके
ततो निवेद्यं पितरद्य सादरम् ॥६३॥
तथाथवा वाचमुपेत्य मङ्गला
ममाद्य विश्वासघनं मनोऽभवत् ।

भवादृशः सत्यमृते न भाषते
पिकाः प्रगायन्ति न पञ्चमं विना ॥६४॥
कलावती प्राह ततस्त्वरावती
कुतोऽम्ब कामं विफलं विलम्बसे ।
असौ प्रदोषः समुपैति सत्वरं
कुरुष्व मातामहदिष्टपालनम् ॥६५॥
प्रयाहि मातामह पूतजीवना
नदीमदीनां तटपुष्पपादपैः ।
विधाय शौचं चिनु पुष्पसञ्चयं
तथाऽविलम्बं तुलसीदलान्यपि ॥६६॥
अन्योपचारानपि भृत्यबान्धवाः
प्रचिन्वतां सत्यसमर्चनाकृते ।
विशुद्धिमाधाय वयं स्वविग्रहे
त्वयोपदिष्टं विधिमाश्रयामहे ॥६७॥
ततः सुदेवः स्वविधौ त्वरान्वितः
समुत्थितः प्रास्थित वीचिमालिनीम् ।
तमन्वगच्छन् स्वजनाः सभक्तिकाः
समातृका चापि कलावती सती ॥६८॥
पथि व्रजन्तो मुरवैरिगीतिका
प्रचारयन्तो मधुरां समूर्च्छनाम् ।
तदा दिनान्ते पुरि तत्र नागरा
निरञ्जनं सत्ययशो व्यतानिषुः ॥६९॥
क्रमेण तेषामनुमार्गमीयुषां
परःसहस्राः सहचारिणोऽभवन् ।
न तेषु वस्त्वन्तरगोचरा कथा
विना रमानाथयशःपरम्पराम् ॥७०॥

जले स्थले तत्र पुरे समीरणे
तदान्तरिक्षे पथि गेहचत्वरे
प्रसूनपुण्योपवने तथा घने
चचार सारो मधुरः प्रतिस्वरः ॥७१॥

न ये परेशं प्रतियन्ति नास्तिका
न तेऽप्यलं भक्तिमपोहितुं तदा।
प्रकीर्णकीर्तिं भगवन्तमाश्रिताः
स्वकाम्यलाभाय हृदा मुदानमन् ॥७२॥

प्रियं समाकर्ण्य सुगीतनिस्वनम्
गवाक्षमार्गेषु गताः पुरस्त्रियः।
यथास्वकं दीप्तमनोरथाप्तये
श्रीसत्यपूजां प्रणमाप्रचक्रिरे ॥७३॥

ऊर्द्ध्वं पताकाः परितः समुच्छ्रिताः
समीरणस्पर्शविधूनिता भृशम्।
आश्वासयाञ्चक्रुरिवान्तरं तदा
पुराङ्गनानां करपल्लवोपमाः ॥७४॥

अतीत्य पन्थानमथो पुरस्य ते
तरङ्गिणीसैकतशुभ्रवालुकाः।
विधाय दिग्धाश्चरणाङ्कपंक्तिभिः
पयःप्रवाहे समवातरन्नमी ॥७५॥

आवाह्य तीर्थानि विशोध्य तत्पयः
सङ्कल्पपूर्वं प्रविधाय मज्जनम्।
ततः सुदेवः परिधाय वाससी
प्रतिश्रयं स्वं स्वगणैरुपाश्रयत ॥७६॥

भृत्यैस्तथा बन्धुगणैर्यथायथं
पूजोपचारानभिवीक्ष्य संश्रितान्।

मोदं सुदेवः समुपाप्तवद् भृशं
कलावती मातृयुतापि तत्क्षणे ॥७७॥
श्रीसत्यपूजोचितवस्तुसञ्चयात
क्रमेण दीपावलिभिस्तमःक्षयात ।
सबान्धवानाञ्च सतां समागमात
प्रदोषकालः सफलो व्यवर्द्धत ॥७८॥
प्रदोषसंज्ञा द्विविधार्थवाचिका
प्रकृष्टदोषान्वित एककस्तयोः ।
यतश्च दोषः प्रगतः स चापरः
परार्थ एव प्रकृतेऽभिनन्द्यते ॥७९॥
सुधाकरः पूर्णकलोऽमलच्छविः
करेण कम्रेण दिशः परामृशन ।
मृदङ्गवीणादिसुरम्यशिञ्जितै-
र्निमन्त्रितः प्राप इवाम्बराङ्गने ॥८०॥
गतो यदस्तं सविता दिनात्यये
नालं ततो द्रष्टुमिमं महोत्सवम् ।
क्रुधा विधौ तेन विलोहितं वपुः
प्रपन्नवानेष तदा किमम्बरे ॥८१॥
प्रदोषकालोत्थमरुत् सुशीतलो
लसत्पताकाः परितो चिकम्पयन ।
तदागतानां परिमर्दसम्भवं
शरीरजोष्माणमिह व्यसीस्मरत ॥८२॥
शेफालिकासौरभसारसाधनो
ववौ समन्तात पवनः सुपावनः ।
विधाय लीलाप्लवनं सरोवरे
श्रिताधिकारः किल सत्यमन्दिरे ॥८३॥

पुरस्त्रियो मङ्गलशब्दतत्पराः
    समर्चनारम्भमचीकरन्जिनाः ।
निर्यद्गभीरस्वरपूरिताम्बरा
    मृदङ्गवीणामुरजाद्यस्तथा ॥८४॥
स स्वस्तिवाचा प्रथमोपयुक्तया
    पूजां समारभ्य सभक्तिनिष्ठया ।
गणेश्वरादीन् प्रथमं समर्चयन्
    सत्यं प्रधानं सविशेषमार्चयत् ॥८५॥
सम्पाद्य पूजामनुपद्धतिक्रमं
    निवेद्य नैवेद्यमथो व्यतीसरत् ।
समुत्सृजन्नेष सुवर्णदक्षिणा
    द्विजोत्तमेभ्यः फलकाम्यया ददे ॥८६॥
श्रीसत्यदेवस्तुतिनिष्ठिता कथाम्
    अश्रावयन्नाप्तजनान् स भक्तितः ।
श्रीसत्यदेवे रतिमाश्रिता नराः
    क्षणे क्षणे तस्य जयं व्यघोषयन् ॥८७॥
परःसहस्राः सुहृदश्च तत्परं
    समाप्तिमाप्ते सुरसत्यपूजने ।
विशालशालामपहाय सोत्सवाः
    स्वकीयगेहाभिमुखं प्रतस्थिरे ॥८८॥
अथापयातेषु जनेषु सर्वत-
    स्तस्मिन् निवासे परिशून्यतां गते ।
लीलावती स्वीयतनूजया समं
    श्रीसत्यमूर्त्तेरुपकण्ठमागता ॥८९॥
प्रणम्य भक्त्या गललग्नवाससा
    कृताञ्जलिर्भूमितलस्थमस्तका ।

प्रसादयामास सबाष्पलोचना
श्रीसत्यदेवं स्तुतिपूर्वयाचनैः ॥६०॥

अवैषि हे नाथ मनः शरीरिणां
त्वमेष यत् सर्वमयः सनातनः ।
बहिस्तथान्तः प्रभुता तवाद्भुता
जनातिगं शंसति दैवतं परम् ॥६१॥

इयत्समा मानसतः प्रवासितो
विमूढया त्वं न कदापि संस्मृतः ।
अथाधुना भूतपराभवाल्लयात्
समाश्रितस्त्वं विदितापराधया ॥६२॥

तमोवृतं मे हृदयं चिरात् परं
पितुः प्रसादादधुना विकस्वरम् ।
अनेन साम्यं वृणुतेऽसिताष्टमी-
निशा शशाङ्केन समुज्ज्वलोत्तरा ॥६३॥

जगत्पिता त्वं नियमानुवर्तनात्
स्वसन्ततिं दण्डयसे विभूतये ।
ततोऽपराधस्य फलं समीयुषी
न गेहदाहाद्यनुशोचनं श्रये ॥९४॥

विपत्तिमायाति यदा सुदुर्जन-
स्तदा वरेण्यं शरणं प्रपद्यते ।
ततो विपत्तिः प्रियसम्पदः परा
दधात्यसौ काम्यफलानुकूलताम् ॥६५॥

अदग्धगेहा स्थिरवित्तसञ्चया
विषादशून्या प्रचितोत्सवासवा ।
कृतोपचारा परिचारिकाशतैः
शरण्य पादौ तव नास्मरं पुरा ॥६६॥

त्वयैव तुन्नस्तपनस्तपत्यसौ
        सुधाकरः श्वेतयते चराचरम् ।
समीरणो वाति बहिस्तथान्तरे
        तरङ्गिणी नृत्यति मञ्जुशिञ्जिता ॥९७॥
त्वयानुशिष्टा जलदास्तपात्यये
        नयन्ति शान्तिं सलिलैः क्षितेस्तलम् ।
फलं प्रसूनञ्च फलन्ति पादपाः
        क्रमोऽपि कालानुगतस्त्वया कृतः ॥९८॥
त्वयेशितं रूपमुपैति लोचनं
        रसं रसज्ञा श्रवणं नभोगुणम् ।
त्वगिन्द्रियं स्पर्शगुणं प्रपद्यते
        घ्राणं समालिङ्गति गन्धसञ्चयम् ॥९९॥
अलं विवेक्तुं हृदयं हिताहिते
        चिरं त्वयाधिष्ठितमेव देहिनाम् ।
सुखादिकं जीवगुणञ्च सेवते
        त्वमेव सर्वाधिपतिः श्रियः पते ॥१००॥
मयापि यो दोषचयः पुरा कृत-
        स्तवैव तत्र प्रभुताऽनुभूयते ।
तव प्रभावं परिमुच्य यद् भवे
        न कश्चन प्राणपरिग्रहेऽप्यलम् ॥१०१॥
मन्यस्व तस्मादपराधलाघवं
        त्वद्विस्मृतिर्या त्वयकैव सा कृता ।
कृपानिधे शातय दुःखदुर्विधां
        चिराय नो निष्ठुरतां भजस्व मे ॥१०२॥
पती समावर्तय भव्यवर्त्मना
        त्वमावयोः सत्वरमत्र पत्तने ।

तावेव नौ सर्वविधप्रियावधी
पतिव्रताया न पर: पतिं विना ॥१०३॥
पदारविन्दं तव देववाञ्छितं
पुरा मनो नौ विजहाति न क्षणम् ।
त्वमेव देवो न परं श्रयावहे
शिवं पतिस्त्वागतमाशु साधये. ॥१०४॥
श्रीसत्यस्य पदाम्बुजे स्थितमतिर्लीलावती भक्तितः
स्वं भावं विनिवेद्य यावदभवद् भूमीनमद्विग्रहा ।
साष्टाङ्गप्रणिपातमाप तरसा यावच्च मुग्धात्मजा
तावद् विष्णुपदादभूत् समुदिता लोकोत्तरा भारती ॥१०५॥
हे लीलावति किं विषीदसि परं तुष्टोऽस्मि वो भक्तितः
क्षान्तो दोषचयः प्रदत्तमभयं क्षेमं भवेत् सर्वतः ।
व्यापत्तिं समतीत्य वैश्यकुलजावायास्यतः सत्वरं
शान्तिं संश्रयतं कृतौ प्रचरतं प्रोत्तिष्ठतं हृष्यतम् ॥१०६॥
वाणीं तामशरीरिणीं श्रुतवती लीलावती बिभ्रती
मोदं लोकविलक्षणं प्रियसुतामुत्थाप्य साश्वासयत् ।
क्षोणीन्यस्तशिराः प्रणम्य शतशः श्रीसत्यनारायणं
गत्वा तातमिव स्थितं समवदत् सर्वं सुदेवं द्विजम् ॥१०७॥
अथ स विदितवृत्तः प्रीतचित्तः सुदेवो
वणिगधिपतिजायामाह लीलावतीं ताम् ।
अलमिह तव वत्से चिन्तया भव्यमाप्तं
यदयमखिलनाथः सत्यदेवः प्रसन्नः ॥१०८॥
वितरति परितुष्टः सर्वमर्थं स देवो
हरति निखिलमर्थं रोषदुष्टः क्षणेन ।
तदयमहरदादौ रोषितः सर्वमर्थं
न चिरमपि स देयात्तोषितस्तेऽभिलाषम् ॥१०९॥

सुन्दरदेव-संकलितः

# सूक्तिसुन्दरः

( पूर्वानुवृत्तिः )

[ डाः श्रीयतीन्द्रविमल-चतुर्धुरीण-सम्पादितः ]

।। अथ पताका ।।

नृपतिनिजाम[चमूनां]चरणार्पण-बहुल-पीडाभिः ।
रचयति बहिरिव रसनामरुणध्वजकैतवाद्धनिः ।।१४३।।

भानुकरस्य ।।

भयेन कृष्णान्यरुणानि रागात्
पाण्डूनि कान्तादि-वियोगभाजाम् ।
द्विषां मनांसि ध्वजकैतवेन
लोलानि भो त्वां नृप संश्रयन्ति ।।१४४।। सुन्दरस्य ।।

इति सू० पताका व० त०

।। अथ भूमिपति-प्रस्थान-वर्णनम् ।।

त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विष-
स्त्वं बाणान् दशपञ्च मुञ्चसि परे सर्वाणि शस्त्राण्यपि ।
ते देवीपतयस्त्वदस्त्र-निहतास्त्वं मानुषीणां पति-
र्निन्दा तेषु कथं स्तुतिस्त्वयि कथं श्रीकर्ण निर्णीयताम् ।।१४५।।

काञ्चीं काञ्ची न धत्ते कलयति न दृशा केरली केलितल्पं
सिन्दूरं दूर एव क्षिपति करतलन्यस्तमान्ध्री पुरन्ध्री ।
सौराष्ट्री माष्टि भूयः सपदि नयनयो रक्तयो रक्तिमानं
कार्णाटी कर्णिकायां मलिनयति मनो मानसिंहप्रयाणे ।।१४६।।

कयोरप्येतौ ।।

गाजी-जलालदीन क्षितिपकुलमणे द्राक् प्रयाणे प्रती[मः]
प्रेयस्यः प्रारभन्ते तरलतरगलिव्याकुला मङ्गलानि ।

नेत्राम्भःपूरपूर्ण-स्तनकलशमुख-न्यस्तबाल-प्रवाला-
स्त्रुट्यन्मुक्ताकलापच्युतकुचकुसुमव्रजदाना कीर्णलाजाः ॥१४७॥
इन्द्रः प्रक्षुब्धचित्तो दिशि दिशि सकलान् दिक्पतीन् सावधानान्
कुर्वन् वज्राच्छपाणिः सुरवरवलितां देवसेनां निगृह्य ।
स्वर्गद्वारे यदीयोद्धतबलनिहतप्रौढढक्कानिनादं
श्रुत्वाऽतिष्ठत्प्रकम्पत्कुचकलशतटीकिन्नरीगीयमानः ॥१४८॥
श्रीयाज्ञिकानाम्
जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोषादशेषा
दिग्योषाः क्रान्ति सद्यस्त्वदरिनृपवधूनेत्रनीरापगासु ।
संगम्य त्वत्प्रतापैस्तदनु किमु दधौ दोहदं देव तासां
प्राची प्रातः प्रसूते यदियमुरुमहःखण्ड-मार्तण्डबिम्बम् ॥१४९॥
रामचन्द्रस्य ॥
भेरीभाङ्कृतिभिस्तुरङ्गनिनदैः कुम्भीन्द्रकोलाहलैः
प्रस्थाने तव वीरभान दलितं ब्रह्माण्डभाण्डोदरम् ।
आधाय ज्वलति प्रतापदहने रक्षैः पुनर्वेधसा
तारानायक-तारका-सुरसरिद्व्याजाद्विधाऽऽयोजितम् ॥१५०॥
भानुकरस्य ॥
आजि-स्वद्वाजिराजिप्रखर खुरतर(?) न्यासलीलाभिरुर्व्यां
दीर्णायां देव निर्यन्नविरलमवनीपाल पातालवह्निः ।
अश्रीयाद्विश्वमेव प्रतिनृपतिवधूनेत्रवारामुदारा
धारा यद्येनमारादरिकुलदमन द्राङ्न निर्वापयेयुः । १५१॥
सत्यं त्वं पुरुषोत्तमोऽसि नियतं तत्रापि रामो भवान्
प्रस्थाने तव लज्जयेव नमति व्यक्तं यतो मेदिनी ।
द्राक् पूर्वाचलपश्चिमाचलकुचावाबिभ्रती प्रोच्छलद्-
ढक्कारावचलत्पयोधिलहरी चैलाञ्चलैश्चञ्चलैः ॥१५२॥ रामचन्द्रस्यैतौ ॥
जीमी कम्पति वीप्स्यति प्रतिवनं बीबीगणीप्रव्रज-
त्योमस्य प्रतनोति च स्खलनतामारात् प्रभुर्भारतः ।

दुर्यावाः प्रचलन्ति वीचिनिवहैर्धूलीभिराफुल्ला नभा
अस्माने प्रतिहन्यते तव चमूयानेऽभियाने प्रभो(?) ॥१५३॥
प्रस्थाने तव भूमिपाल वसुधा जाता रजोधूसरा
त्वद्विड्दारपयोधरोऽञ्जनशुलं वर्षत्यधोऽश्रूदकम् ।
झञ्झाश्वासहिमाश्ममौक्तिकगणान् वामाः किरन्ति द्विष-
स्तत्रोत्पात इति प्रतापदहने यास्यन्ति ते शत्रवः ॥१५४॥
दिङ्नारीणां स्पृशत्यर्को रजःसन्दूषिताम्बरम् ।
प्रस्थाने नृप ते सन्तोऽपर्ययन्ति रजोवृताः ॥१५५॥ सुन्दरदेवस्यैते ॥

इति सु० भूमिपति-प्रस्थान व० त०

॥ अथ युद्धवर्णनम् ॥

भल्लैर्भिन्नाः प्रतिनृपतयः शङ्खनादानुदाराञ्
श्रुत्वा राजन् पुनरपि भुजादण्डकण्डूतिभाजः ।
आलिङ्गन्त्यास्त्रिदशसुदृशो भ्रूलतां वीक्ष्य मुग्धां
चापभ्रान्त्या चपलमनसो हस्तमावर्तयन्ति ॥१५६॥ भानुकरस्य ॥
नो चापाकलनं न पत्रिधरणं न ज्यासमाकर्षणं
नो बाहुस्फुरणं न बाणगमनं संलक्ष्यते ते रणे ।
किन्तु प्रौढकरीन्द्र-कुम्भविगलन्मुक्तागणप्रस्फुरत्-
प्रत्यर्थिक्षितिपालमौलिमणिभिर्विद्योतते भूरियम् ॥१५७॥ गौर्याः ॥
वीर त्वं कार्मुकश्चेदकबर् कलयस्युग्रटङ्कारघोषं
दूरे सद्यः कलङ्का इव धरणिभृतो यान्ति कङ्कालशेषाः ।
शङ्कापङ्कश्च किं कारणमिति मनसा भ्रान्तिपङ्कायितेन
त्यक्त्वाऽहङ्कारमङ्काद् विसृजति गृहिणीं किञ्च लङ्काधिनाथः ॥१५८॥
अकबरीकालिदासस्य ।
करवारिरुहेण सन्धुनाने तरवारिं नृपतौ मुकुन्ददेवे ।
रचयन्त्यमरावतीतरुण्यः प्रथमं काञ्चनपारिजातमालाम् ॥१५९॥
गौडस्य ।

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति पुरः
समालोक्याजौ त्वां विदधति विकल्पान प्रतिभटाः ॥१६०॥ कस्यापि ।

कोदण्डस्तव हस्तगो हृदि वसत्यर्तिस्तु विद्वेषिणां
त्वं दाता रभसेन मार्गणगणस्तानेव संसेवते ।
वीर त्वन्तु जयस्यमित्रमनिशं ते यान्ति वैकुण्ठतां
संग्रामे तव भूपते महदिदं चित्रं समालक्ष्यते ॥१६१॥ धरणिधरस्य ।

रक्तं नक्तञ्चरौघः पिबति वमति च प्रस्तकुन्तः शकुन्तः
क्रव्यं नव्यं गृहीत्वा प्रणदति मुदितो मत्तवेतालबालः ।
क्रीडत्क्रीडमस्मिन् रुधिरमधुवशात् पूतना नूतनाङ्गी
योगिन्यो मांसमेदप्रमुदितमनसो वीरशक्तिं स्तुवन्ति ॥१६२॥

कवीश्वरस्य

मिलितमिहिरभासं मौलिमेतस्य दृष्ट्वा
पर-वरतनु-पादालक्तकं तर्कयन्त्या ।
त्वदरिधरणिजानिर्भानुबिम्बेन गच्छन्
सुरनगरमृगाक्ष्या वीक्ष्यते साभ्यसूयम् ॥१६३॥ भानुकरस्य ।

को दण्डं न ददाति देव भवते कोदण्डमालम्बते
को नाराचमुपैति पारमुदधेः कोणारुणे लोचने ।
का कुञ्जान्तरमेत्य वैरितरुणी काकुं न वा भाषते
राजन् गर्जति वारणे तव पुनः को वा रणे वर्त्तताम् ॥१६४॥ कस्यापि ।

श्रीवीर त्वद्रिपूणां रणशिरसि शरैर्भिन्नशीर्षाङ्कुकानां
वीरावेशाद् गतानां दिवमधिक-रुषाऽन्योन्यशौण्डीर्यभाजाम् ।
श्लेषे दिव्याङ्गनानां भुवि-कचनिचये प्राक्कटाक्षे शरासा-
सीषुभ्रान्त्यारिवीरभ्रमकुटिलहृदामाजिरावर्त्तते स्म ॥१६५॥ सुन्द०स्य ।

॥ इति सु० युद्धव० व० ॥

॥ अथ रणक्षितिः ॥

भवत्तुरग-निष्ठुर क्षुरदलन्नगेराचिता
क्षणात् रामरविच्युतप्रतिनृपालकैलाञ्चिता ।
इयं रणधरा भवद्विरददानधाराजलैः
किमु व्रणतलेऽर्पितं वसनपट्टमासिञ्चति ॥१६६॥

युष्मद्दोर्दण्डमण्डल्यवनमितनमत्खण्डकोदण्डदण्डो-
न्मुक्तेषु च्छिन्नमूर्छत्प्रतिनृपतिभुजाखण्डमुण्डावकीर्णा ।
गायन्नृत्यत्-प्रवल्गद्रजनिचरवधूदत्ततालैः करालै-
र्वैतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीमा ॥१६७॥ लक्ष्मणस्यैतौ ।

वाहव्यूहखुरक्षतां वसुमतीं संवीक्ष्य मूर्च्छावतीं
भेरीभाङ्कृति-चञ्चलेन पयसा वारां निधिः सिञ्चति ।
दिग्बाला तनुते निजामनृपते वातं पताकांशुभि-
र्धूलीघोरणिरश्विनीसुतमिव प्रष्टुं दिवं धावति ॥१६८॥
अकबरीकालिदासस्य ।

क्षुण्णा त्वद्वाजिराजी-खुर-पुटनिचयैर्वीक्ष्य हा वैरिरक्तं
स्वात्मन्यासिक्तमुग्रद्विरदमदजलैः शीतलैः शीलिताश्च ।
संमूर्च्छन्तीमिवेक्ष्य ध्वजवसनचलैर्वीजितामाजिभूमिं
धूलिः स्वर्गं द्रुता ते रचयति सुयशःसौरभान् दास्ययोगात् ॥१६९॥
सुन्दरस्य ।

इति रणक्षिति व० ॥

॥ अथारिनगरम् ॥

स्नाताः प्रावृषि वारिवाहसलिलैः संरूढदूर्वाङ्कुर-
व्याजेनाऽऽत्तकुशाः प्रणालसलिलैर्दत्त्वा निवापाञ्जलिम् ।
प्रासादास्तव विद्विषां परिपतत्कुड्यस्थ-पिण्डच्छलात्
कुर्वन्ति प्रतिवासरं निजपतिप्रेतेषु पिण्डक्रियाम् ॥१७०॥ हनुमतः ।

त्वद्वैरिणो दूरपलायितस्य प्रकाशयन्नक्रमरण्यमार्गम् ।
कृशानुरासीदभिनन्दनीयस्तुङ्गेषु लग्नो निजमन्दिरेषु ॥१७१॥ कस्यापि

त्वदरिनृपति-केलीसौध-संरूढ-दूर्वा-
ङ्कुरकवल-विलोलं वीक्ष्य रङ्कुं सुधांशोः ।
उपवनहरिणीनामुन्नतभ्रूलतानां
प्रसरति[रति] जानिग्लानिजन्मा विवर्तः ॥१७२॥ भानुकरस्य ।
अधाक्षीन्नो लङ्कामयमिममुदन्वन्तमतरद्
विशल्यं सौमित्रेरयमुपनिनायौषधिगणम् ।
इति स्मारं स्मारं त्वदरिनगरीभित्तिलिखितं
हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥१७३॥ कस्यापि ।
जङ्गाल क्षोणि-पाल त्वदहितनगरे सञ्चरन्ती किराती
कीर्णान्यालोक्य रत्नान्यतिखर-खदिराङ्गारशङ्का करोति ।
मुक्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासामोदानुयातैरलिकुलनिकरैर्धूमशङ्कां बिभर्ति ॥१७४॥
अकबरीकालिदासस्य ।

इति श्रीसुन्दरदेवविरचिते सूक्तिसुन्दरे अरिनगरवर्णनतरङ्गः ॥
[ समाप्तोऽयं ग्रन्थः ]

## शोकसन्देशः

व्यतीते सौरभाद्रपदस्य दशमदिवसे कलिकातास्थ-प्रसिद्ध-ठाकुर-वंशाभिजनाः प्रख्यातकीर्तयो भूस्वामिप्रवराः सज्जनाग्रेसरा महाराज-बाहादुर सार् प्रद्योतकुमारठाकुर के. सि. आइ. इ महोदयाः काश्यां विश्वेश्वरसायुज्यमाययुः । सप्ततिवर्षदेशीया इमे महाराजबाहादुराः ठाकुर-वंशे प्रख्याततमानामन्यतमा विद्यया देवद्विजश्रद्धया विपुलया समृद्ध्या च वङ्गेष्वन्येष्वपि प्रदेशेषु, किं बहुना युरोपादि-भूखण्डेष्वपि विशेषेण विख्यातनामान एवासन् ।

चिराय कलिकातावासिनोऽप्येते महाराजबाहादुरा विमानाभियान-भीषणया सम्भाव्यमानयाऽन्तया दुरवस्थया भीषिताः पञ्चषमासात् पूर्वमेव

सपरिवाराः सगृहदेवाः सपुरोहिताः ससभापण्डिताः सपार्षदाः सानुजीविनः सभृत्यवाहनाश्च विश्वेश्वरराजधानीं शरणीकृतवन्तः। चिरवासिनामपि सुदुर्लभा तावताऽत्यल्पेनैव कालेन तत्रैव तेषामियं विपत्तिर्दुःखाकुर्वत्यपि परिजनान् श्रद्धासम्पदमेव सूचयति महाभागधेयानां महाराजबाहादुराणाम्। वयमेषां शोकक्षुब्धानां परिजनानां शान्तिं कामयामहे।

अयञ्च तदीयस्यैव कस्यचिच्छ्लोकत्वमापद्यमानः शोकोच्छ्वासः—

सज्जनाग्रगण्य-स्वधर्मनिष्ठ-भूपतिप्रवर-महाराजबाहादुर-सार् प्रद्योतकुमार-
ठाकुर के॰ सि॰ आइ॰ इ॰ महोदयानां काशीप्राप्तौ—

शोकोच्छ्वासः

गोपाल[1] भालविफलोऽसि विपालकोऽसि
हा ब्रह्ममय्यसि[2] हता हतकेन धात्रा।
त्रैलोक्यमोहन[3] महस्तव हा विलीनं
प्रद्योत एष भवतां चलितोऽचलातः॥१॥

शुभादृष्टं नष्टं दुरितनिचयः प्राप विजयं
रविर्यातो दूरं तिमिरमुदितं दुःखनियतम्।
विलुप्तः प्रद्योतो बत सुमनसः शान्तिरहिताः
स्थितिर्दुःखा तेषां किमिह शरणं व्यापदि सताम्॥२॥

विना मेघं वज्रं निपतितमकाण्डे शिरसि नः
प्रयातः प्रद्योतः सुरपुरमपास्य प्रियजनान्।
तदालम्बः सम्भावितगुणगणः सम्प्रतितरां
क्व वा वासं यायादहह विषमो दैव-नियमः॥३॥

प्रजास्त्वद्विच्छेदान्नृपवर दृढं शोक-जलधौ
निमग्नाः खिद्यन्ते व्यसनमसमं दुःसहमिदम्।

---

1 अयमेषां गृहदेवता।

2. इयं मूलाजोड-संस्कृतमहाविद्यालयप्रतिष्ठापिता कालीमूर्तिः।

3 इदमेषां काश्यां प्रतिष्ठापितं शिवलिङ्गम्।

पितेव त्वं तासामखिलविपदां शोधनविधौ
सदा लग्नः पूजां मनुजपतियोग्यां समगमः ॥४॥
त्वया नीतं मानं निजकुलमुदात्तेन विधिना
समाकृष्टाः सन्तो विनय-नयभूम्ना सुकृतिना ।
द्विजे देवे भक्तिस्तव सुविदिता नित्यमसमा
त्वया स्वर्यातेन व्यसनविहतं हन्त सकलम् ॥५॥
स्मरामस्ते वाचं विनयसुभगां प्रीतिमधुरा-
मुदारार्थां लोकद्वयपरिचितां गौरवनताम् ।
तथा नीतिं नीतिप्रिय-बहुमतां रूपमनघं
हहा दैवादस्तं गतमखिलमेतत् क्षितितलात् ॥६॥
न ते गत्वा रूपं नयनसरणिं हन्त परतो
वचस्ते न श्रोत्रं न च सुचरितं दृश्यपदवीम् ।
गतस्त्वं हा दूरे सुरपतिपुरे पुण्यमधुरे
विमुञ्चामो बाष्पं वयमिह चिरं त्वत्स्मृतिभृतः ॥७॥
त्वया हीना दीना क्षितिप नृपलक्ष्मीर्विलपति
क्व यायात् सा शान्तीश्चिरपरिचयोच्छेदविधुरा ।
प्रवीरेन्द्रं पुत्रं तव सुसदृशं सा गतवती
पुरः शान्तिं गत्वा कथमपि कुरुष्वाशिषमिमाम् ॥८॥
शिवज्योतिर्लीनो निरवधिसमास्तिष्ठतु भवान्
भवानीशप्रीतिर्विलसतु चिरं तावकगणे ।
त्वदीयं दृष्टान्तं शुभमनुसरन्नुज्ज्वलगुणः
प्रवीरेन्द्रो राज्ये प्रभवतु सुदीर्घायुरनघः ॥९॥
ये ये ठाकुरवंशसम्भवमणिप्रायाः प्रसन्नो हरः
शौरीन्द्रोऽथ यतीन्द्रमोहन-नृपो यैरेतदुद्भासितम् ।
काल-स्यन्दन-चक्रनेमि-पतितास्ते नामशेषास्ततः
प्रद्योतोऽवसितो रवेर्विलयनो हाहाऽप्रफुल्लं कुलम् ॥१०॥

श्रीसंस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| October, 1942 | १८६४-शकीये आश्विने २५श-वर्षस्य ६ष्ठ-संख्या | Vol. XXV No. 6 |


# सिद्धान्तभेदवीजाङ्कुरः

[ निबन्धकः—श्री'जातुचित्'-तर्कतीर्थः ]

प्राज्ञोपेक्षणलब्धवागवसरो वाचैव जय्यं जग-
न्मन्वानोऽतिगभीरदर्शनदशाऽतत्त्वानि सत्यापयन् ।
नव्यः कश्चन भव्यसाधनकृते विह्वलयते साम्प्रतं
व्यामोहाय विचारकृच्छ्रविमुखे लोके गुणान्वेषिणाम् ॥

'दार्शनिकसिद्धान्तभेदवीजत्रयं' नाम कश्चन निबन्धः संस्कृतसाहित्यपरिषत्पत्रिकायाः श्रावणसंख्यायामवलोक्यते । निबन्धेऽस्मिन् सर्वत्र सर्वजनग्राह्य-भाषाप्रयोगादुपारतो निष्करुणो निबन्धक इति अप्रतिपत्तिमूढानामस्मादृशां भवन्त्यमाद्यन्ति चित्तानि । ततश्च स्वकीया अप्रतिपत्तयो विप्रतिपत्तयश्चाधस्तादुपदर्श्यन्ते, सविनयमभ्यर्थ्यन्ते च निबन्धकात्तन्निरासकरणाय ।

१ "तादात्म्यसम्बन्धावच्छिन्न-कार्यता-निरूपित-कारणत्वं समवायिकारणत्वमिति फलितार्थः" इति निबन्धकृत्सन्दर्भः ।

अत्राप्रतिपत्तिः—"समवाय-सम्बन्धावच्छिन्न-गुणत्वावच्छिन्न-

निरूपित-द्रव्यत्वावच्छिन्नकारणता" समवायि-कारणता न वा? "कार्य-समवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धे"रित्यत्र—"कार्यस्य समवायः प्रत्यासत्तिः, कारणस्य तादात्म्यम्। यत्र समवायेन कार्यं तत्र तादात्म्येन द्रव्यमिति नियमा"दिति वदन् दिनकरः किं भ्रान्त एव? किञ्च, तादात्म्यसम्बन्धावच्छिन्न-घटत्वावच्छिन्न कार्यतानिरूपितकारणता दण्डेऽपि कथं नास्ति? दण्डस्यापि सम्बन्धविशेषेण घटप्रत्यासन्नत्वात्। घटे दण्डत्वावच्छिन्न-कारणतानिरूपित-कार्यता एका, कपालत्वावच्छिन्न-कारणतानिरूपित-कार्यता चान्या, तत्रान्त्या तादात्म्य-सम्बन्धावच्छिन्ना, नाद्या, इत्यत्रापि किं मानम्? अपि च कार्योत्पत्त्यर्थम् उत्पत्स्यमानत्कार्याश्रयव्यक्तौ पूर्वक्षणे कारणसत्त्वमपेक्षितम्, तत्र च कार्याश्रयत्वं कार्यतावच्छेदकसम्बन्धेनैव, तादात्म्येन च कार्याश्रयः कार्यमेव, तस्य चोत्पत्तेः पूर्वं सत्त्वे सत्कार्यवादे प्रवेशः, असत्त्वे चानारम्भ एव कार्याणामित्यारम्भवादिमते तादात्म्यसम्बन्धवाच्छिन्न-कार्यता कथमुपपद्यत इति न प्रतीमः।

यथोक्तसन्दर्भे तादात्म्यसम्बावच्छिन्नत्वं न कार्यतायाम्, अपि तु कारणत्वेऽन्वेति, इति तु उन्मत्तेनैव मन्तुं शक्यम्; यतस्तथा सति कार्यतानिरूपितेति वचनानर्थक्यं कारणतायाः कार्यतानिरूपितत्व-नियमात्। अतिव्याप्तिसम्भावना च। तस्मात् फलितार्थोऽयमफलान्येव प्रसूत इति प्रतिभाति।

आरम्भवादिना सिद्धान्त इति कृत्वा यत् कारणलक्षणमुल्लिखितं निबन्धकारेण तत्रारम्भवादिभिरुपक्षिप्तम् अन्यथासिद्धेष्वतिव्याप्तिनिवारकं विशेषणं नोपलभ्यते। किं यावदभ्यस्तं यावद् वा स्मृतिपथमवगाढं तावदेव सिद्धान्तपदवीमधिरोढुमीष्टे? अथ वा "एकदेशविकृतमनन्यवद् भवति श्वेव, प्रवृद्धे दन्ते छिन्ने वा कर्णे श्वैवे"ति न्यायात् सिद्धान्त एवायम्? ८

"कारणज्ञानाधीनत्वात् कार्यज्ञानस्ये"त्यादिवाक्ये निबन्धकेन तदुपजीव्यभूतेन वा कार्यस्वरूपविज्ञानाय कारणत्रयानुशीलनमुपदिष्टम्। नात्र

वयं विद्मः—दण्डचक्राद्यनुशीलनस्य क्रियानुपयोगो घटस्वरूपपरिज्ञाने इति। किञ्च, कारणज्ञानाधीनत्वं कार्यज्ञानस्येति कुतो नियमः? दृश्यते हि धूमज्ञानाधीनत्वं वह्निज्ञानविशेषस्य, न तु वह्निज्ञानाधीनत्वं धूमज्ञानस्य कुत्रापि। यद्यपि कारणलिङ्गकानुमित्यात्मक-कार्यज्ञानस्य कारणज्ञानाधीनत्वं दृश्यते क्वचिदेव, नैतावता कारणज्ञानाधीनत्वं कार्यज्ञानस्येति नियमः सिध्यति। न च नियमो न विवक्षितः, नियममन्तरेणावश्यकत्वकीर्तनायोगात्। किञ्च, कार्यस्वरूप-विज्ञानाय किं प्रयोजनं कारणज्ञानस्य? न ह्यदृष्टमेघविशेषेण जनेन वृष्टिर्नालोक्यते, न वा अपरिज्ञातदण्डेन घटो न ज्ञायते, नापि विज्ञातदण्डेन घटो ज्ञायत एव। यदि समवायिकारणज्ञानाधीनत्वे तात्पर्यम्, तदा कारण-'त्रया'नुशीलनोपदेशो हीयते। घटदर्शनात् पूर्वं पृथक् कपालदर्शनं भवतीति न श्रुतम्। किञ्च, समवायिकारणज्ञानाधीनत्वे त्रसरेणोरचाक्षुषत्वं स्यात्। न ह्यविज्ञात-द्व्यणुकेन त्रसरेणुर्न दृश्यते। तस्मात् कारणज्ञानाधीनत्वं कार्यज्ञानस्येति अपसिद्धान्तोऽयम्।

अपि चात्रैव वाक्ये "निखिलकार्याणामेतत्त्रितयकारणजन्यत्वा"-दित्यस्ति। निखिलकार्यकुक्षिप्रविष्टस्य जन्याभावस्य किं समवायिकारणं किं वा असमवायिकारणम् इति यदि कृपया उपदिशन्ति निबन्धकास्तर्हि आरम्भवादिनामा सृष्टेः पुञ्जीभूतोऽयमज्ञानान्धकारश्चिराय दूरीभूय खपुष्पसौरभेणाभिनन्दिष्यति बुधविधूदयमवनौ नवीनम्।

"कार्येभ्योऽत्यन्तभिन्नं कारण"मिति प्रतिज्ञातार्थसाधनाय "कपालोत्तरोत्पत्तिप्रतीति-विषयत्वाद् घटस्य कपालभिन्नता" इत्यादिसन्दर्भोऽवतारितः।

अत्र घटमात्रस्यैव पक्षतया यत्र घटे कपालोत्तरोत्पत्तिप्रतीतिः कस्यापि न जाता, तदवच्छेदेन भागासिद्धो हेतुः। किञ्च, कपालोत्तरोत्पत्तिकत्वस्यैव हेतुत्वसम्भवे प्रतीतिविषयत्वांशवैयर्थ्यम्। न च कपालोत्तरोत्पत्तिकत्वमुत्पत्तिप्रतियोगित्वमिति प्रकृते प्रतियोगित्वपदार्थप्रवेशात्तद्-

घटितत्वं नास्तीत्यदोष इति वाच्यम्, प्रकृतेऽपि हेतुतावच्छेदककुक्षौ तत्-प्रवेशस्यानिवार्यत्वात्, निष्प्रयोजनकत्वस्य तथाप्यनपायाच्च। यदि तु प्रकृते संसर्गमुद्रया तत्प्रवेशोऽभीष्टस्तथापि प्रतियोगित्वसम्बन्धेनोत्पत्तेरेव हेतुत्व-सम्भवे प्रतीतिविषयत्वानर्थक्यं दुर्निवारमिति प्रतिभाति।

एवं "कपालाधिकरणक प्रतीतिविषयत्वा" दित्यत्रापि कपालाधिकरण-कत्वस्यैव हेतुत्वसम्भवे शेषवैयर्थ्यम्। यदि तु "अर्थेनि तात्पर्य"मिति न्यायात् कपालनिष्ठविशेष्यतानिरूपितप्रकारताकत्वे तात्पर्यम्, तर्हापि तादात्म्यसम्बन्धावच्छिन्नप्रकारतामादाय भ्रम-प्रतीतिविषयतामादायापि व्यभिचारः। यद्येतदर्थं तात्पर्यान्तरमाविष्क्रियते निवेशा वा केचन विवक्षिता इत्युच्यते तर्हि अलमेतावता प्रयासेन प्रबन्धकलेवरं वर्धयित्वा, परिषदश्च महामूल्यानि 'कागज'वस्तूनि क्षपयित्वा, एकमेव वाक्यमेक-मेव पदमेक एव वा वर्णो विलिख्यताम्, तत्रैव भवतां सर्वेऽर्था विवक्षिताः सन्तु।

"जलाहरणप्रयोजनासाधकत्वात् कपालस्ये"ति नेदं तत्त्वम्। दृश्यते हि कपालेनापि जलाहरणमनुदिनमत्रैव नगरे पथिपार्श्ववर्तिनां भिक्षुकाणाम्। दृश्यते च घटस्यापि सच्छिद्रस्य जलाहरणासामर्थ्यम्, तथाचान्वयव्यति-रेकाभ्यां व्यभिचारेणासाधकोऽयं हेतुः।

तदत्र तथाविधमुत्तरमाशास्यते येनेदृशानां निबन्धरत्नानां परिषत्-पत्रिकायां प्रचारो विदुषां नापरितोषायेति प्रतिपन्नं स्यात्, न स्याच्च वादप्रतिवादविशृङ्खलवसरः।

---

# भारतीय-युद्धसज्जा

[ निबन्धकः—श्रीसुरेन्द्रमोहन-पञ्चतीर्थः ]

कौचिद् बन्धू व्यथितहृदयौ वादजल्पौ वितण्डा-
हेत्वाभास-च्छलकलरव शङ्कया वर्जयित्वा ।
युद्धातङ्के कथमपि कथा भारतीया विचित्राः
कुर्वातें तौ विरसवदनौ दिव्यभाषाभिरामाः ॥

प्रथमो बन्धुः—

स्वल्पो वह्निः प्रसरति यथा दिग्विदिक्षु प्रकामं
क्षीणं स्रोतो गिरिविलभवं वर्द्धतेऽस्यां धरायाम् ।
क्षुद्रं युद्धं जलनिधितटे संभूतं हा प्रतीच्यां
देशे देशे स्थलजलनभो व्यश्नुते तत तथैव ॥

द्वितीयो बन्धुः—

लङ्काद्वीपे दशमुख-सुतो मेघनादः प्रसिद्धो
मेघान्तःरथो गगनतलगो व्योमयानाश्रितश्च ।
वीरोत्तंसः रामरचतुरश्चित्रयुद्धञ्चकार
विज्ञानार्थः खलु सुविदितो भारतेऽभूत् समग्रः ॥

आग्नेयास्त्रं वरुणविशिखो वायुवाणो भुजङ्ग-
वाणस्तद्वद् गरुड इति च ख्यातिमाप्नोति शश्वत् ।
'ग्यासो' वाणः कुशलवकरे जृम्भते जृम्भकाख्यः
शत्रोर्मूर्च्छा-जनन-निपुणो वैरिसम्मोहनो यः ॥

नालीकास्त्रं सरल-नलजं वन्दुकाख्यं पुरासीद्
भीमो वाणो हतशतजनो यश्च नाम्ना शतघ्नी ।
'कामानं' भो नवयुगभवं तस्य तुल्यं विशालं
वज्रं चक्रं तडिदिति सखे तत्तु शैवं त्रिशूलम् ॥

प्रथमो बन्धुः—

लङ्काराज्ये वसतिमकरोद् यक्षराजः कुबेरो
वैमात्रेयो रघुपतिरिपोरग्रजः शक्तियुक्तः ।
यो हि भ्रात्रा समरविजितः पुष्पकं व्योमयानं
कैलासाद्रौ वसतिमकरोद् वर्जयित्वा रथं तम् ॥
सीता लब्ध्वा रघुकुलपतिस्तद्विमानावलम्बी
लङ्काद्वीपाद् गगनपथगो भारतं संविवेश ।
वार्त्ता ह्येषा निखिलविदिता कालिदासस्य काव्ये,
तिग्मज्योतिर्मिहिरकिरणं को न पश्येत्स्फुटाक्षः ? ॥

द्वितीयो बन्धुः—

दुष्मन्तेन प्रथितयशसा द्वापरे देवकार्यं
स्वर्गं लोके सुरपतिसखेनागतं व्योमयाने ।
मेघे वातेऽस्खलितगमने मातलिर्यस्य यन्ता
विश्वैर्ज्ञातं विवरणमिदं भाति शाकुन्तले भोः ॥
स्वर्गं मर्त्तं ह्यविहतगतिर्नारदो वै सुरर्षिः
स्मारं स्मारं त्रिभुवनगिरं सर्वगस्तत्र सद्यः ।
मिथ्यैवैतन्नहि विवरणं 'ढेकि'यानाश्रयोऽसौ
आकृत्या भो यदनुकुरुते वर्त्तमानं विमानम् ॥

प्रथमो बन्धुः—

राजेन्द्रोऽसौ दशरथ इति स्यन्दनं यस्य चित्रं
तत्रारूढश्चपलमचलत् प्राच्यवाची-प्रतीचीः ।
ऊर्द्ध्वञ्चाधो वियति भुवने नागलोके सुखेन
तस्यासाध्यं किमिव हि भवेद् व्योमयानाश्रितो यः ॥
तत्पूर्वीयो नृपरघुपिता यो हि नाम्ना दिलीपः
खट्वाङ्गो यस्त्रिदशपतिनामन्त्रितो देवलोके ।

दैत्यान् हत्वा सुलघुगतिना देवयानेन शून्याद्
मर्त्यं लोकं रम विशति मुदा विष्णुपौराणिकी वाक् ॥

द्वितीयो बन्धुः—

दीर्घः कालो न किल विगतो द्वापरे शेषभागे
शाल्वो दैत्यो यदुकुलपतेर्द्वारकायां नगर्याम् ।
'सौभे' याने कृतनिवसतिर्वह्निवर्षं ववर्ष
व्यासस्योक्तौ किमिति मनुजाः श्रद्दधाना न हि स्युः ? ॥
व्यासोक्तौ चेन्नहि मतिरतो श्रूयतामीशवाणी
देवः कृष्णः परमपुरुषो ज्येष्ठपुत्रस्य पाण्डोः ।
इन्द्रप्रस्थाध्वरपरिषदो द्वारकायां समेत्य
शाल्वं दैत्यं युधि निहतवानित्यवादीत्स्वयं सः ॥

उभौ—

वह्निज्वालां क इह मनुजः काङ्क्षति क्षान्तचित्त
आग्नेयास्त्रं मरणजननं याच्यते कैर्बुधैर्वा ।
एको देवो निखिलभुवने शान्तिदाता यदि स्याद्
नष्टे हेतौ प्रभवति पुनः कार्यमेतद् विचार्यम् ॥

---

# दार्शनिकसिद्धान्त-भेदवीजत्रयम्

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीविधुभूषण-न्याय-तर्कतीर्थः ]

सदसद्भ्यामनिर्व्वाच्याया माया-मरीचिका-गन्धर्वनगर-स्वप्नादिसदृश-विविधविचित्रविलासविलासिताया नितरामेवाघटनघटनपटीयस्या अविद्याया महामहिमप्रभावेन नित्य-शुद्ध-बुद्ध-मुक्त-स्वभावे सच्चिदानन्दलक्षणे ब्रह्मणि परिकल्पितमिदं मायानङ्ग-विलास-कल्पलतिकाव्यामोहपूर्णतयाऽपारमार्थिक-

मप्याब्रह्मज्ञानं पारमार्थिकवद् व्यवहारविषयं जगद् ब्रह्मणो विवर्त्तितमिति विवर्त्तवादिनां सिद्धान्तः। विवर्त्तो नाम पूर्वावस्थामपरित्यज्यावस्थान्तर-ग्रहणम्। यथा रज्ज्वात्मनाऽवस्थितस्यैव वस्तुनः सर्पात्मना भानम्। एवञ्च नित्य-शुद्ध-बुद्ध-मुक्तस्वभावमेकं कर्त्तृत्वभोक्तृत्वादिधर्मान्तरासंपृक्तमपरिच्छिन्न-मविकारि सच्चिदानन्दरूपमपि ब्रह्मानाद्यविद्यावशात् तद्विपरीतानित्यत्वा-नेकत्व-परिच्छिन्नत्वाद्यनेकधर्मवदिव प्रतिभातं जगदिति व्यवह्रियते। न खलु विना नामरूपाभ्यां जगतः किमपि सत्त्वमिति ब्रह्मैव केवलं सत्। ननु विवर्त्तमानस्य रज्ज्वादेः सावयवत्वदर्शना-न्निरवयवस्य ब्रह्मणो विवर्त्तः कथ-मिति चेत्? निरंशेऽपि व्योम्नि तलवत्त्वाधोमुखत्वेन्द्रनीलनीलत्व-कटाहतुल्यत्वादि-कल्पनावदत्रापि मायायाः प्रभावेन सम्भवत्येव विवर्त्त इति ब्रूमः।

ननु कासौ मायेति चेत् सदसद्भ्यामनिर्वाच्या यथायथवस्तुस्वरूपा-वरिका मनसाऽप्यचिन्त्यनीयप्रभावा मिथ्याज्ञाननिवर्त्तिकेति तत्परिचयः।

अनिर्व्वाच्यत्वं नाम परिदृश्यमानत्वेनाशक्यापलापस्थितत्वे सति स्वरूपावधारणानुकूलशब्दप्रयोगानर्हत्वम्। तथाहि—यथा व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षं निमेषमात्रेणैव प्रफुल्लकुसुम-फल-शाखा-पल्लव-दल-समाकुले मत्तकूजनरतविहगनिकरमधुरनिनदमनोहरं रसालतरुवरं जनयतैन्द्रजालिकेन प्रदर्शिता माया न ह्यसदिति विजानद्भिरपि परिहर्त्तुं शक्या,—क्षणादूर्ध्वमे-वानुपलभ्यमानत्वाच्च सदित्यपि न निश्चेतुं शक्येत्यतोऽनिर्वचनीया सा, तथैव नामरूपाभ्यां व्यवह्रियमाणत्वेनाहंकरोमि पश्यामीत्याद्यनेकानुभवपर्य-वसानलक्षणविविधभोगसम्पादकतया च जगदिदं व्यवहारदशायामसदिति निश्चेतुमशक्यमपि साधनातिशयबललब्धमाहात्म्यैरपरोक्षीकृताखिलवस्तुतत्त्वै-र्निरतिशयानन्दसन्दोहास्वादचतुरचित्तचञ्चरीकैः प्रज्ञाचक्षुभिर्मनीषिभिर्ब्रह्म-विज्ञानदशायामनुपलभ्यमानत्वाच्च न पारमार्थिकसदित्यपि जगन्निर्णेतुं शक्य-मतोऽनिर्वाच्यं किल कार्यं तन्मूलीभूतमायास्वरूपञ्च।

ननु माया नामाज्ञानम्। तच्च यथायथवस्तुज्ञानाभाव इति कथमनिर्वाच्य-

मिति चेत् ? अत्रोच्यते—मिथ्याज्ञानोत्पत्त्यव्यवहित-प्राक्क्षणे वस्तु-स्वरूपबुद्धौ सत्यां नहि कथमपि भवति मिथ्याज्ञानोत्पत्तिः। न च शुक्ताविदं रजतमिति धीरव्यवहितपूर्वक्षणावच्छेदेन सत्यामिदन्तावच्छिन्ने शुक्तिबुद्धौ सम्भवदुत्पत्तिका। तथा च शुक्तिस्वरूपानवबोध एव तत्र रजत-बुद्धिसाधक इति सिध्यति। एवञ्चेत्तत्र शुक्त्यज्ञानं न शुक्तिज्ञानाभावः, किन्तु शुक्तिस्वरूपावरकः कश्चिद् भावपदार्थ एव। अज्ञानेन च वस्तु-स्वरूपावरणं क्रियते, वस्तु चान्यथा प्रतिपाद्यते इत्यज्ञानस्य कार्यं द्विधा। शुक्तिस्वरूपावरणमावरणशक्तेस्तथा रजतत्वधीश्च विक्षेपशक्तेः सम्पाद्यते। तथाहि—"अज्ञानं नाभावः, वस्तुस्वरूपावरकत्वाद् वस्त्वन्यथाप्रतिपादक-त्वाच्च, यन्नैवं तन्नैवं यथा घटाभाव" इत्यनुमानेनाज्ञानस्य भावत्वं निर्वहति।

एवञ्चाविद्यावशादेव सर्वं वस्तुजातं नामरूपाभ्यां कल्पितं भवति, ऋते च नामरूपे न किञ्चिदपि परिशिष्यते कल्पितस्य, न हि शुक्तौ रजत-नामरूपाभ्यां विना जातुचिदणीयानपि रजतसत्त्वयोगः। तथैव व्यवह्रिय-माणानामपि घटादीनां न मृत्तिकास्वरूपातिरिक्तत्वमिति सर्वमेवाविद्यावशात् कल्पितमिदम्।

ननु शुक्तौ रजतत्वभानेऽपि न शुक्तिका रजतत्वेनाङ्गीक्रियते, मृत्तिकायां पुनर्घटादि-भाने सत्यपि घटस्यापि मृत्तिकात्वमङ्गीकर्तव्यमेवेति शुक्तिरजत-ज्ञानवन्न तज्ज्ञानं मिथ्येति चेत्—अत्रेदमुच्यते, किं घटमृत्तिकयोस्तादात्म्यं भवदभिप्रेतम् ? आहोस्विदनयोर्भेदोऽभिमतः ? आद्ये निखिलास्वेव मृत्तिकासु घटबुद्धिः प्रसज्येत, नह्यभिन्नयोर्वस्तुनोरणीयानप्यवस्थाभेदः सम्भ-वति। तथाच "मृन्मयात् पिण्डाद् घटः समुत्पद्यते" इति बुद्धिर्न स्यादुभयो-रेकत्वाद्भेदबोधकपञ्चम्यनुपपत्तेः। नापि द्वितीयः कल्पः,—स्वतो भिन्नाद् वस्तुनो भिन्नस्य वस्त्वन्तरस्योपत्त्यसम्भवात्। न हि घटात् पटः सम्भ-वति, तैलं वा पांशुनिकरेभ्यः। एवञ्चेदं घटमृत्तिकयोर्भेदाभेदयोर्दुर्निरूप-त्वात् कार्यकारणयोर्नाभेदो नापि भेद इत्यनिर्वाच्यस्वरूपत्वमेव सर्वेषाम्।

नन्वद्वितीये ब्रह्मणि जगत्कल्पने को हेतुरिति चेत् ? ऐन्द्रजालिक-मायावद् ब्रह्मणोऽपि मायाशक्तिरेव जगद्धेतुत्वेन कल्पनीयेति ब्रूमः ।

ननु माया ब्रह्मातिरिक्ता न वा ? आद्ये स्व-सिद्धान्तहानिः, ब्रह्मणोऽतिरिक्तवस्त्वनङ्गीकारात् । अनतिरिक्तत्वे च मायाया ब्रह्मस्वरूपत्वात् सत्यत्वप्रसङ्ग इति भवत्सिद्धान्तो न युक्तिसह इति चेत् ? न,—मायाया अनिर्वाच्यत्वान्नासौ दोषः । मायाशक्तिरेव जगत्कारणमित्युक्तमस्माभिः । शक्तिश्च शक्तान्नाभिन्ना, नापि च भिन्ना । तथाहि दहनादिसमवहिता दाहादिप्रतिपादकशक्तिरग्न्यादिस्वरूपव्यतिरेकेणानुपलभ्यमानत्वान्नानलाद् भिन्ना, स्थितेऽप्यग्नौ मणिमन्त्रादिप्रतिबन्धकसमवधानदशायां शक्तिकार्यस्य दाहादेरनुपलम्भान्नापि दहनाद्यभिन्ना च । एवमेव लौकिकशक्तिर्यथा निर्वचनानर्हा तथैव ब्रह्मनिष्ठापि मायाशक्तिर्न ब्रह्मणो भिन्ना, नाप्यभिन्ना चेत्यनिर्वाच्यैव सा । एवञ्च निखिलस्यैव कार्यजातस्य परिकल्पितत्वान्मिथ्यात्वमिति केवलं कारणमेव विविधकार्यस्वरूपेण प्रतिभासीत्यतो कार्यकारणयोरभेदो विवर्तवादिनामिति संक्षेपः ।

तत्रारम्भवादिनो नैयायिका वैशेषिकाश्च । परिणामवादिनश्चानेके । सांख्याचार्याः पातञ्जलाश्च परिणामवादिनः । वैष्णवाचार्यपादानामपि श्रीमद्रामानुजाचार्य-वल्लभाचार्य-मध्वाचार्याः । जीवगोस्वामिनो मते तु भगवत्तत्त्वैसन्यदेवा अपि । शाक्तानामप्यभिनवगुप्तपादाः, शैवानाञ्च श्रीकण्ठ-नीलकण्ठ-श्रीकरादयश्च सर्वं परिणामवादिनः । विवर्तवादिनश्च वेदान्तिकचूडामणयो जगद्वन्दितपदारविन्दाः श्रीमच्छङ्कराचार्यपादाः ।

# संस्कृत-नाटकानि

( पूर्वानुवृत्तिः )

[ निबन्धकः—वि, कृष्णस्वाम्यय्यङ्गार्यः ]

वृत्तिः। रसपरिपोषसामग्रीषु समुचितशब्दसंघटनारूपाश्चतस्रो वृत्तयो लाक्षणिकैरङ्गीकृताः। कैशिक्यारभटी भारती सात्वती चेतीमा वृत्तयः। अतीव सुकुमाराणां, कोमलानां मृदूनामिति यावत, पदानामुपनिबन्धे कैशिकी। एषा च वृत्तिः सुकुमारतमस्य शृंगारस्य करुणस्य च परिपोषिका। शृंगारे हि सौकुमार्य्यमन्यादृशम्भवति, काठिन्यादीनां शृंगारविरोधितायाः प्रत्यक्षतः साक्षात्कारात्। मार्दवमेव मान्मथस्य भावस्यान्तरं रूपमित्यप्यभियुक्तानामुक्तिरत्र प्रामाण्यमावहति। करुणे तु दैन्यमूलकमकामेनाऽप्यभ्युपगन्तव्यमेव मार्दवम्। न हि समुपचित-शोकोऽश्रुपातादिभिरनुभावैर्विवृतदैन्यः पुमान् प्रौढोक्तिगम्भीरां वाग्वृत्ति-माश्रयितुमलम्भवति। निसर्गत एवासावभिभूतभावान्तरेण करुणरसेना-प्लावितचेता मृदुमधुरं भाषते। तदत्र शृंगारकरुणयोर्व्यक्तिव्युद्बोधाय शिथिल-पदबन्धा सुकुमाररूपा कैशिकी वृत्तिरेवोपयुज्यत इति नाटकतत्त्वविदो वदन्ति। रौद्रबीभत्सयोरत्यतिप्रौढतया प्रौढपदनिगुम्फरूपा यथार्थनाम-धेयारभटी वृत्तिरेवात्र तयोरनुकूला वृत्तिरित्यभिमन्यते। रौद्रे हि क्रोधा-वेशपरवशो युक्तायुक्तविवेकादीन् पृष्ठतः कुर्वाणो विरोधिनिरसनमात्र-दत्तदृष्टिर्नायकः स्वरूपोचितमौद्धत्यमंगीकुर्वाणः कठिनकठोराणि श्रुति-पुटभेदकानीव पदान्युपयुञ्जानस्साहसकार्येषु प्रवर्त्तते। टवर्गीयाक्षरबाहुल्य-मित्यादिभिर्वैशेषिकैः प्रकारैः कोपाटोपप्रदर्शनार्थमारभटी यत्नतोऽत्युद्ध-तार्थसन्दर्भरमणीया भवति। क्रोधे हि मार्दवं पायसे तिक्तमिव न कदाऽपि कस्याऽपि बहुमतं भवति। एवमेव बीभत्सेऽपि मज्जमांस-

शोणितशवादीनां पदार्थानामवलोकनेन जाता जुगुप्सा "आंत्रप्रोते"त्यादि-भवभूतिपद्यानुसारिण्या प्रौढपदगुम्फनसरण्यैवाभिव्यक्तव्या, न त्वीषन्मृदुल-पदसन्दर्भेण। जुगुप्साप्रकाशनमप्येतादृशैरेव पदैस्सम्भवतीत्यनुभवसाक्षिक-मेवैतत्। आक्रोशरूपेण हि जुगुप्सितपदार्थेषु दोषाविष्करणं दृश्यते। अत एव रौद्रबीभत्सयोरारभटी वृत्तिरिति लाक्षणिकास्समगमयन्। हास्य-शान्ताद्भुतानामीषत्सुकुमारतया तेष्वनतिसुकुमारपदगुम्फा भारती वृत्ति-र्वृत्तिवैचित्र्यविशेषात्मिका प्रशस्यते। चामत्कारिकी चेयं साधारणीमेव प्रति-पत्तिमर्हन्त्यपि भारती रसपरिपोषसाधनतया वृत्तिष्वन्तर्भाविता। हास्यादिषु रसेषु नितरां मृदूनां प्रौढानां वा भावानामसमावेशात् भारती वृत्तिरेव तेषामभिव्यक्तौ समर्था। वीरभयानकयोरीषत्प्रौढत्वेन तादृशी सात्वती वृत्तिरेव तत्रापि प्रशस्यते। धीरोदात्तनायकेन प्रसङ्गप्राप्तस्याप्यौद्धत्याद्यैः स्वरूपाननुरूपस्य प्रयत्नेन परिहरणीयतया वीररस एवास्य शोभा प्रसरति। प्रतिनायकस्तु परशुरामादिर्धीरोद्धतो रौद्राभिनये समर्थः। स्वरूप-गुणभूतस्यौद्धत्यस्य सुसमावेशतया क्रोधदीप्तेः सौलभ्यात्। अत एव धीरोदात्तस्य नायकस्य परिग्रहनियमान्नाटकेषु वीरशृंगारयोरेव प्राधान्य-मितरेषामानुषङ्गिकतेत्युपपद्यते। अन्यथा क्रोधोद्दीप्तेश्चित्रणमनुसन्धानेन कविना रौद्रप्रधानमपि नाटकमुपनिबध्येत। रौद्रस्यापि नायके धीरोदात्ता-वस्थापन्नेऽपि क्वचित् सम्भवमात्रं न प्रत्याख्यातव्यम्। प्राधान्येनास्य परिपोषो धीरोदात्तस्वरूपविरोधान्न संपद्यत इत्येव लाक्षणिकानामाशयात्। अत एव वीररौद्रयोरविरोधो जगन्नाथेन निरूपित इत्यास्तां तावत्। सर्वरससाधारण्यौ च मध्यमकैशिकीमध्यमारभटीनाम्न्यौ वृत्ती। मृद्वर्थेऽपीषत्प्रौढपदसन्दर्भा प्राथमिकी। अपरा तु प्रौढेऽप्यर्थे किञ्चिन्मृदुपदगुम्फनरूपा। अनयोश्च मार्दवप्रौढिम्नोर्व्यत्यस्यमानम्। यत्किञ्चित्पदेन बोध्यमानाल्पभावं नवरसेष्व-विशिष्टमामनन्ति। उदाहरणानि च लक्षणग्रन्थेषु बहुधा प्रतिपादितानि। रत्नावल्यां कैशिकी, नागानन्दे सात्वती, मुद्राराक्षस-वेणीसंहारयोरारभटी च स्पष्टमवगन्तुं विनिशान्तुं च शक्यन्ते। नृत्यगीतविलासादीनि

शृंगारानुगुणानि साधनानि कैशिकीवृत्तेरुत्कर्षमापादयन्ति। शोक-विलापादीनि करुणरसपरिपोषकाण्यपि कैशिकीवृत्तेर्विषयीभवन्ति। मध्यम-वर्गीयस्य (Middle Class) समाजस्य प्रतिबिम्बमत्र कैशिक्यां चित्रितं मनोरमं रूपमवलम्बते। उत्तमवर्गीयाणामपि रामादीनां शृंगारप्रधाने काव्ये नायकतयालम्बनेऽपि तदुचिता सुसंस्कृताभिरुचिप्रणीता वृत्तिर्नोप-लभ्यत एव। सात्वती हि सत्त्व-शौर्य-त्याग-दया-हर्षादिभिः परिष्कृतरूपोत्तम-वर्गीयोऽपि शृंगारसम्पर्कविरहान्न प्रशंसास्पदम्। एवञ्च संस्कृतनाटकेषु शाकुन्तलमेकं विना शृंगारप्रधानमुत्तमं नाटकान्तरं नास्त्येवेति सुवचम्। तत्र तत्र सामान्यप्रतिभाशक्तिभिः कविभिश्चित्रितस्यापि शृंगारस्याधम-वर्गीयत्वात्। सुसंस्कृतवेषधारी प्रौढवासनापरिपाकरमणीय उच्चवर्गीयता-व्यपदेशभाजनं शृंगारोऽतीव विरल एव दृश्यते। अत एव नृत्य (dance) गीतविलासाद्युपस्कृतशोभा कैशिक्युत्तमरीतिकं शृङ्गारं नैव परिपुष्णाति। भारती तु घटनास्वरूपासम्बद्धा केवलमुक्तिवैचित्र्यमुपपादयन्ती चमत्कार-साधनं भवति। सूत्रधारो हि नाटकप्रयोगात्प्राक् प्रस्तावनायामृतुवर्णनादिषु व्यापृतः स्ववाक्यसंवादिनटवचनमाकर्ण्य प्रस्तुतवृत्तान्तमुपनिबध्नाति। एता-दृशयोः प्रवर्तक प्रयोगातिशययोरुभयोरपि भारती वृत्तिरभ्यर्हितेति विमर्शकाः प्रतियन्ति। प्रतापरुद्रीये च।

प्रस्तूयमानकालस्य गुणवर्णनया स्वतः।
प्रविशेत्सूचितं पात्रं यत्र तत्स्यात्प्रवर्तकम्॥१॥
एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः।
पात्रप्रवेशो यत्रार्थं प्रयोगातिशयो मतः॥२॥

इत्येतयोर्लक्षणं द्रष्टव्यम्। एषा च भासस्य नाटकेषु सर्वत्रापि दृश्यते।

प्रवृत्तिः। पात्रभेददेशभेदानुसारेण यथार्हमुपयुज्यमाना वेषभाषाभूषाः प्रवृत्तिपदेनाभिधीयन्ते। वाचिकाभिनयोपस्कारकतया च भाषायाः पृथगत्र निर्देशो नोपपन्न इति केचित्। एषा हि भाषा प्रतिपात्रमङ्गी-कृतैवाऽभिनयस्य शोभामभिवर्धयति। न त्वभिनयतादात्म्यमश्नुते। अत

एवमस्याः प्रकृतिषु परिगणनं मुनिनाभिहितम्। एवमेव वेषभूषयोरपि आहार्याभिनयसामग्रीमात्ररूपत्वात्प्रवृत्तावन्तर्भावः सङ्गमनीयः।

सिद्धिः। प्रेक्षकाणामानन्दानुभव एव सिद्धिः। एतदेव साहित्यस्य प्रधानं लक्ष्यम्। स्वरादिपोषणादीन्यपि लक्ष्यसाधनसामग्रीरूपाण्येव। सर्वप्रथमं कवीनां साम्राज्यमेतस्यामायतते। एतदनुरोधेनैव कविषूत्कर्षापकर्षविनिर्णयोऽपि। नाटकीयनियमानतिक्रम्य चतुःषष्टिसंख्याकैरङ्गैः परिकर्मितं समवेतसंधिपञ्चकमुपात्तधीरोदात्तनायकमपि नाटकमुपनिबध्नानः सामाजिकानामानन्दानुत्पत्तावकृतार्थः कविरसमर्थः परिगण्यते। स्वतंत्रमनोवृत्तिर्लाक्षणिकानवजानानो नियमानामुल्लंघनमेव कर्तव्यमिवानुपालयन्नपि निरङ्कुशः कविवरः सामाजिकानामाह्लादसमुत्पत्तौ कृतकृत्यः साहित्यसम्राडिति व्यपदेशं लभते। नान्दीपद्ये द्वादशाष्टादश वा पदान्युपयुञ्जीत, नेतोऽधिकानि न्यूनानि वेति प्रथममुद्घोषितवन्तोऽपि लाक्षणिकाः कालिदासादीनामन्यानुकरणपरंपराविरोधिनां महाकवीनां नाटकानि जनप्रियाणि प्रचारमुपगतान्यवेक्ष्य स्वीयलक्षणाननुगमात्परिखिन्नान्तरङ्गाः पश्चात् 'नान्दीपद्येषु कैश्चित्पदनियमो न स्वीकृत' इति वाक्यमेकं समयोजयन्। केचित्तु व्याख्यातृशिरोमणयस्तृतीयं पन्थानमनुसरन्तः स्वतंत्रप्रवृत्तेर्मुरारिकवेरनर्घराघवे नान्दीपद्ये मनागपि काव्यार्थसूचनमपश्यन्तो लक्षणस्याव्याप्तिनिराकरणाय व्याकरणज्ञानमहिम्ना कम्बुशब्दस्य सीतार्थकतां व्युत्पाद्य, रावणकृतस्य तदपहारस्य पदैरेतैः कथमपि स्मारणादस्ति काव्यार्थसूचनेति प्रतिपाद्य समतुष्यन्। एवं लक्षणाननुगमेऽपि चमत्कारोपधानमात्रेण रसिकानां मनांस्यावर्जयन्तः कवयः शाश्वतकीर्तिप्रतिष्ठाः सुगृहीतनामानः प्रख्यायन्त इति सिद्धिरेव प्रधानं लक्ष्यं साहित्यसाम्राज्यस्य।

स्वरादिकम्। स्वरातोद्यगानानि नाट्योपयुक्ते संगीतभागेऽन्तर्भूतानि विस्तरतो भरतेन प्रतिपादितानि च। संगीतशास्त्रपारदर्शिनामपरोक्षा इमे विषयाः प्रकृते न निरूपणीयाः। साहित्यभाग एवास्माकं चर्चाधिकारात्। एवमेतान्साक्षात्संगीतशास्त्रसंबद्धान्विषयानत्रैव दिङ्मात्रमुपदर्श्य, अग्रे

वस्तुपाठ्ये वाचिकाभिनयप्रकरणे पात्रादिविषयाः सामान्याभिनयप्रकरणे च भरताचार्येणोपन्यस्ता दृश्यन्ते ।

वस्तु । नाटकेषु प्रतिपादिता कथैव वस्तुपदेनोच्यते । इतिवृत्तमित्यस्यैव नामान्तरम् । एतच्च प्रासंगिकमाधिकारिकञ्चेति द्विविधमुपदिष्टम् । आधिकारिकमेव प्रधानो नायकवृत्तान्तः अधिकारो नाम स्वामित्वम् । तच्च प्रकृते फलनिरूपितमेव ग्राह्यम् । फलञ्चानिष्टपरिहारानन्तरभाविनी नायकप्रयत्नसाध्येष्टप्राप्तिः । इष्टप्राप्तेरधिकारी च नायकादन्यो न संभवति । अधिकारेणाधिकारिणा वा निर्वृत्तमित्याधिकारिकमिति व्युत्पत्तिः । तथा च प्रधानतयामूलाग्रमुपनिबद्धमितिवृत्तमाधिकारिकमिति सिध्यति । प्रतिज्ञायौगन्धरायणादौ नायकस्य प्रयत्नलेशशून्यत्वेऽपि विचक्षणस्यामात्यस्य साहसैर्निष्पाद्यमानस्य वासवदत्तापहरणादिरूपस्येष्टलाभस्य नायकसमवेततयातस्य कथाभागस्याधिकारिकत्वमेव । यथा—शाकुन्तले दुष्यन्तशकुन्तलयोः कथा । प्रासंगिकन्तु प्रसङ्गात्प्राप्तं प्रधानकथायामंगभूतं क्वचित्क्वचित्प्रधानकथाविच्छेदे पुनस्संघटनसाधनमितिवृत्तम् । अस्य नामव्युत्पत्त्यैवानुषंगिकता स्पष्टं प्रतीयते । यथा—मेनकथा शकुन्तलायां मारीचाश्रमभानीताथा तत्र सर्वदमनस्य जन्म, शैशवञ्च कथारूपतया परिणतम् । सर्वदमनस्य कथा विना शाकुन्तलस्य परिपूर्तिरेव नोपपद्यते, उत्तरत्र नायकयोरन्योन्यसमागमस्यान्यथासम्भवात् । प्रासंगिकस्यातीवाल्पत्वे प्रकरीति नाम । अन्यथा तु पताकेति । प्रकरी च तत्रैव दाशवृत्तान्तः । दुर्वाससः शापेन विस्मृतप्रणयकथस्य दुष्यन्तस्य, प्रत्याख्यातायाः शोचनीयामवस्थामापन्नायाः शकुन्तलायाश्च समागमोऽपि दाशोपनीतांगुलीयकप्रत्यभिज्ञानमूलक एव । अत एवात्र विच्छिन्नां प्रधानकथा परिष्कुर्वाणा प्रकरी प्रासंगिकमितिवृत्तं परिणमति । अथैवं द्विविधमपीतिवृत्तं पुनस्त्रेधा विभजन्ति—प्रख्यातं मिश्रमुत्पाद्यञ्चेति । पुराणादिषु प्रसिद्धमितिवृत्तं प्रख्यातमङ्गीकुर्वन्ति । नाटकेषु प्रख्यातस्यैवेतिवृत्तस्योपयोगो लाक्षणिकैर्विहितः । प्रायशः पुराणोदाहृतानामेव कथानामुपनिबन्धाद्धार्मिको विश्वासो दृढतरः संपत्स्यत इत्या-

शयेनैव लाक्षणिका नियमगोलमंगीचक्रिरे। वस्तुतस्तु नाटकानां मूलं पुराणादावेव प्रथममाविरभवत्। अत एव सर्वे नाटककारा लाक्षणिकानां निर्बन्धमन्तरेणाऽपि सकललोकपरिचिताः पुराणकथा एव नाटकेष्वात्मीयेषूपन्यबध्नन्। लक्ष्याणां सूक्ष्मदृष्ट्या परीक्षितारश्चार्वाचीना लाक्षणिकाः पुराणप्रख्यातमेव कथावस्तूपादेयमिति लक्ष्यसमन्वयार्थं नियममकार्षुरिति विमर्शका अभिप्रयन्ति। अस्माकं कवीनां कल्पनाशक्तिरासीन्नवेति महान् संशयोऽधुनातनानां विमर्शकानामुदेति। अत्राप्येषा स्वतन्त्रकथाकल्पनं परित्यज्य पौराणिकवस्तूपादानपद्धतिरेव मूलकारणम्। रसपोषणाय क्वचित् कथाया विपरिवर्तनेऽपि संपूर्णतया स्वतन्त्रस्येतिवृत्तस्य बाहुल्येनानुपलम्भात्। सीतारामादिपात्राणि हि रामायणादौ पवित्रग्रन्थजाते प्रतिपादितरीत्या विचित्रानुभावानि सर्वकार्यसमर्थानि पौराणिकवेषाच्छादितान्येव झटिति बुद्धिमुपारोहन्ति; न तु नाटकीयवेषधारीणि मानवसाधारणैर्गुणदोषैरुपस्कृतानि सामान्यजीवनरंगमनुप्रविष्टान्यस्मन्मित्राणीव स्वकीयैरवस्थाविपरिणामैः साध्वसाधुविभागबुद्धिमुपजनयन्ति प्रतिभान्ति। पौराणिकता चैतेषां भवभूतिप्रभृतिभिरुच्चकोटिकैः कविभिः प्रयत्नेनापादितामपि नाटकीयतां बलादभिभूयापनयन्ती सामाजिकेभ्यो रसास्वादलोलुपेभ्यो द्रुह्यति। आंगल-नाटकपाठकानां मनोभित्तौ हाम्लेट्प्रभृतीनां पुराणसम्पर्कशून्यानां तत्तदवस्थाविशेषैः सम्यक् परीक्षितगुणदोषाणां कविना स्वतन्त्रतया कल्पितानामपि पात्राणां चित्राणि निष्कलङ्कानि प्रतिफलन्ति। नह्येवं क्वापि संस्कृत-नाटकपठनानन्तरं साधारणगुणदोषसंमिश्रवृत्तिः पौराणिकेन धार्मिकावरणेनानाच्छादितप्रवृत्तिः कश्चन पात्रविशेषश्चित्रीयमाणचित्तानां वाचकानां बुद्धौ प्रतिबिम्बितः सन् परममानन्दमनुभावयति। शाकुन्तलेऽपि हि शकुन्तलायाः पात्रमेकं वाचकानां हृदयग्राहिणा मानोज्ञकेन प्रकाशते।

(क्रमशः)

निशम्य सा विप्रसुदेवभारतीं
प्रणम्य भूयो निजगाद साञ्जलिः ।
तात त्वमेवास्य शिवस्य कारणं
विभूतिहेतुर्न परो ममापरः ॥११०॥

इत्थं कथानुकथिकामधिकृत्य तस्मिन्
लीलावतीप्रभृतिभिः क्षपिता क्षपा सा ।
सत्योऽपि दूरविषये वणिजो विपत्तिं
हन्तुं जगाम करणैरगृहीतमूर्त्तिः ॥१११॥

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये
सत्यप्रसादो नाम सप्तदशः सर्गः

—:o:—

## अष्टादशः सर्गः

वणिग्वरो लक्षपतिर्महीगृहे
विधाय सत्यस्य नतिं सभक्तिकाम् ।
अमेध्यभोज्यं निहितं भटैर्जहत्
पत्न्या सुताया लघु सुप्तिमाययौ ॥१॥

न तत्र तस्यास्तरणं सुखोचितं
न चोपधानं न च काचनावृतिः ।
अनावृते भूमितले निषीदतोः
सुप्तिस्तयोर्बोधमपाहरत्तदा ॥२॥

न भूतचिन्ता न च भाविभावना
तदा तयोश्चेतसि सङ्गताभवत् ।
यथैव बाह्यं करणं न्यवर्त्तत
स्वगोचरादन्तरमप्यभूत्तथा ॥३॥

विलोचनं सुप्तिभरेण निश्चलं
निमीलितं तामसमन्वरागमत् ।
वपुस्तथालस्यजडीकृतं तदा
समासदद्भूमितलं त्वरान्वितम् ॥४॥
क्षुधान्वितो भोज्यविधौ निरङ्कुशः
सुषुप्सितो नो शयनं व्यपेक्षते ।
पिबत्यमेध्यं सलिलञ्च तर्षितः
हिताहिते ते प्रविवेक्तुमक्षमाः ॥५॥
सजागरः कोऽपि न भूगृहान्तरे
निरन्तरे ध्वान्तचयैः क्षपाभवैः ।
भटा गृहद्वारि सशस्त्रपाणयः
तदाप्रमादं व्यचरन्नविभ्रमाः ॥६॥
पुरे निशीथे विजने वणिक्पथे
क्रमेण कोलाहलहीनतां गते ।
न यामिकानां परहूतिशब्दितं
विना तदा श्रोत्रगतं स्वान्तरम् ॥७॥
समन्ततो हर्म्यचयः समुन्नतः
शरीरिभिस्त्यक्त इव व्यभासत ।
प्रदीपिकानेत्रशतैः समुज्ज्वलैः
ददर्श तां राजपुरं नवश्रियम् ॥८॥
सुखाकरे राजपुरेऽपि सर्वतः
नृणामभूत सुप्तिमयं विलोचनम् ।
समुन्नते रत्नगृहे सुशोभने
नृपो महिष्या सममेव निद्रितः ॥९॥
सुनीलकाचैरुपगूढदीपिका-
प्रसारितालोकलवे गृहान्तरे ।

तदा न दीपप्रभवाक्षिसम्भ्रमः
        रामादिशत् सुप्तिविघातदूषणम् ॥१०॥
सुकोमलप्रच्छदवस्त्रसंवृते
        बहूपधाने कुसुमैः सुवासिते ।
सुरत्नमालानिकरैरलङ्कृते
        जायापती स्वे शयने सुखं स्थितौ ॥११॥
पुरो द्वयं पादतले तथा द्वयं
        चलत्करं चामरधारियोषितोः ।
व्यधत्त चारुव्यजनं सुशीतलं
        नष्टं यतः स्वेदलवप्रवाधनम् ॥१२॥
मृदुप्रवाहोचितवातसारथिः
        प्रसूनगन्धस्तदपूरयद्गृहम् ।
विसृज्य तं तत्रभवं सुसौरभं
        प्रगृह्य वातो निरगाद् दिगन्तरे ॥१३॥
पुनः समीपोपवनात् समागतं
        समीरणं श्वाससुगन्धनिर्जितः ।
प्रसूनगन्धः समुपेत्य संश्रयं
        ततो गृहाज्जालबिलेन निर्ययौ ॥१४॥
तदा रजन्यां कमले निमीलिते
        द्विरेफमाला प्रियसौरभभ्रमात् ।
गवाक्षमार्गेण नृपाङ्गनामुखं
        समुद्विशन्ती तदुपाश्रयं श्रिता ॥१५॥
निरन्तरैश्चामरचारुचारणात्
        समीरसञ्चारविलोलविग्रहाः ।
द्विरेफसंघाः समभीष्टमाननं
        न लब्धुमेते कथमप्यपारयन् ॥१६॥

मधुव्रतानामुपकण्ठं गुञ्जितं
तस्मिन् गृहे चामरधारिणीगण ।
नृपस्य राज्ञ्याश्च भये । जागरान्
अपाकरोत्तान् लघु वातचालनैः ॥१७॥
विचित्रचित्रप्रान्तताङ्कभूषणा
सुरम्यनानाविधरङ्गसंस्कृता ।
गृहस्य भित्तिः प्रतिमूर्तिशालिनी
स्वधिष्ठितेवास्त गृहाधिदेवतैः ॥१८॥
सतीपतिः क्वापि दहत्यसौ स्मरं
कपालनेत्रप्रभवेण वह्निना ।
अथुरतस्तापसवेशधारिणी
हसप्रभावास्थित लज्जिताद्रिजा ॥१९॥
भगीरथः क्वापि च शङ्खशब्दितः
सरस्विनीं कर्षति जह्नुकन्यकाम् ।
प्रस्यन्दमानं प्रथमं हिमाचलात्
गुरुप्रवाहं सहते त्रिलोचनः ॥२० ।
मथ्नन्ति देवा असुराश्च सागरं
कश्चिन्महामन्दरदण्डसाधनाः ।
नागः स्थितो रज्जुतयात्र वासुकि
विश्वम्भरो मन्दरशीर्षमाश्रितः ॥२१॥
महासमुद्रे शयितो जनार्दनः
श्रीरोदमासेवितपादपङ्कज ।
तन्नाभिपद्मे सरसीरुहे स्थितः
पितामहो ध्यायति दिव्यपूरुषम् ॥२२॥
क्वचित् पुनस्तादृगवस्थितक्रमे
जनार्दनश्चोग्रमलौ मधुमनासुरौ ।

पितामहं तं प्रसितुं समुद्यतौ
विहाय सुप्तिं स हरिर्जिघांसति ॥२३॥
दशावतारा: क्वचिदेव चित्रिताः
विशेषवन्तः पृथगेव शोभनम् ।
विद्यास्तथा केपुचन व्यवस्थिताः
तत्तद्विशेषाश्चितभीमकोमलाः ॥२४॥
तस्मिन सुरम्ये सुविशालमन्दिरे
न देवता का प्रतिभाति भित्तिगा ।
नो तावदानं सुरलोकसम्भवं
सुविश्रुतं भित्तितले न चित्रितम् ॥२५॥
यशःपदं लौकिकवृत्तमुत्तमं
विचित्रचित्रोपगतं ततः स्थितम् ।
असंख्यमक्ष्णोः परितर्पणं परं
तथा चरित्रप्रतिसंस्कृतिक्षमम् ॥२६॥
कियन्ति वा सन्ति नदीमहीभृतां
विचित्रचित्राणि तथा विहायसः ।
वनं पशूनां समजः प्रियच्छविः
क्रीडावनं कुञ्जगृहादिशोभितम् ॥२७॥
नदीतटे पुण्यमयाश्रमावली
स्निग्धाचला होमजधूमसञ्चयैः ।
समेधिता हव्यकृते गवां गणैः
यत्रास्ति चित्रे सदनं तपस्विनाम् ॥२८॥
वेदे पुराणेपु च यत् सुविश्रुतं
तत् सर्वमेवास्ति ततः सुचित्रितम् ।
शिल्पप्रकर्षेण विभाति तत्वतः
सजीवतेव प्रमिता ततस्ततः ॥२९॥

क्वचित् प्रदोषे गगनान्तलम्बितः
दिवाकरः शोणकरो हि चित्रितः ।
क्वचिन्निशान्ते परिपाण्डुदीधितिः
सुधाकरः क्षीणवपुः समीक्ष्यते ॥३०॥
क्वचित् प्रभातक्षततामसच्छटा
विभात्युषा नीलजनारुणच्छविः ।
सरोवरे प्रागनिमीलिताम्बुजे
क्रमेण पद्मस्मितमत्र दृश्यते ॥३१॥
सुप्राकृतानां श्रुतिमार्गमीयुषां
पुराणवृत्तान्यधितिष्ठतां तथा ।
सुविश्रुतानामिह तावतां स्थितिं
दधान तस्मिन्निव विश्वरूपताम् ॥३२॥
प्रदोषकाले भवनस्य कुट्टिमे
सुरम्यपुष्पस्तबका निवेशिताः ।
निशान्त्ययामे प्रगता विशीर्णतां
निन्युर्द्विरेफाननवद्गलन्तापथम् ॥३३॥
प्रदीपिका पूर्वनिशाप्रजागरात्
शीर्णप्रभा वाञ्छति सुप्तिसान्त्वनाम् ।
परिश्रमाच्चामरधारिणीजनाः
निमीलितुं वाञ्छुरपक्रमं यदा ॥३४॥
नृपस्य राज्याश्च ललाटवर्तिनी
प्रस्वेदरेखा समदर्शि बिन्दुशः ।
सुषुप्तिरेतावपहाय तावता
क्वापि प्रवासं समगच्छदच्छलम् ॥३५॥
श्रीसत्यदेवो वणिजो हितेच्छया
महीपतिं सुप्तिगृहं समन्वगात् ।

गदाधरं तं प्रसमीक्ष्य निद्रितः
स चन्द्रकेतुः परिकम्पितोऽभवत् ॥३६॥
ददर्श राजा ज्वलदुग्रलोचनं
गदां समुद्यम्य सरोषभाषिणम् ।
यमोपमं विश्वनिषूदनक्षमं
श्रीसत्यदेवं भयकम्पितात्मना ॥३७॥
उवाच सत्यः परितर्जयन्नसौ
कठोरवाचा परिपूरयन् दिशः ।
विमूढ भक्तं वणिजं ममोत्तमं
निरुध्य पङ्के पतितोऽसि दुस्तरे ॥३८॥
त्वं राज्यगर्वात् सदसद्विचारणां
विहाय कामं प्रतनोषि राजताम् ।
न मां विजानासि विभुं चिरन्तनं
सृष्टिस्थितिध्वंसविधौ भुवः क्षमम् ॥३९॥
तपाम्यहं भास्करमूर्तिमास्थितः
रसं भुवस्तीक्ष्णकरैः समाहरन् ।
तमेव भूयो विसृजामि भूतले
प्रशान्तये लोकसमृद्धिहेतवे ॥४०॥
हुताशने दाहकशक्तिरुत्तमा
जलेषु शैत्यं कुसुमेषु सौरभम् ।
पत्रेषु च श्यामलता मनोरमा
भवाम्यहं सौम्यसुधा सुधाकरे ॥४१॥
अहं जनन्याः सुतमङ्गलैषणा
नवप्रियायाः प्रणयश्च पावनः ।
सुरम्यसङ्गीतकमूर्च्छनाप्यहं
पवित्रसाम्नामनुरागगोचरः ॥४२॥

सिंहः पशूनामहमेव कानने
मृगासुविध्वंसनपटुः सुदुर्मदः ।
यमोऽस्मि लोकक्षयकृत् सनातनः
तनोमि लोकेष्वनुरूपशासनम् ॥४३॥

न केवलं मे प्रकृतिः सुकोमला
क्रियाप्रभेदात् परिवर्तते हि सा ।
भीमं तथा कान्तमुपेत्य विग्रहं
ददामि लोकेऽनुगुणं फलं चिरम् ॥४४॥

कठोरमूर्तिः प्रतिकल्पमुद्धतः
रामत्वमाप्तः परशुं करे दधत् ।
त्रिःसप्तकृत्वः प्रणिहत्य बाहुजान्
वसुन्धराभारहरो भवाम्यहम् ॥४५॥

निशाचराधीशमशेषपातकं
सबान्धवं बद्धपयोधिरुद्धतम् ।
उपेत्य लङ्कां निजदारहारिणं
श्रितस्तथा राघवतां विनाशये ॥४६॥

अधोभुवः प्रोद्धतनेत्रवह्निना
दहामि मानान् सगराङ्गसम्भवान् ।
ताताश्वमेधाश्वगवेषणापरान्
दहाम्यहं कापिलमूर्तिमाश्रितः ॥४७॥

निहन्मि दैत्यान् कलि देववैरिणः
कस्येव वा रात्रिचरान्वयाङ्कुरान् ।
नरः सुरो वा दितिजोऽपि राक्षसः
सुदुर्नयो ध्वंसमुपैति मे क्रुधा ॥४८॥

वात्यामयो भीमगतिः प्रभञ्जनः
भवन्नवाधं परितः परिभ्रमन् ।

सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः




संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| November, 1942 | १८६४-शकीये कार्त्तिके<br>२५श-वर्षस्य ७म-संख्या | Vol. XXV<br>No. 7 |
|---|---|---|

## तृष्णा

[ निबन्धकः—क. व. कृष्णमूर्तिशास्त्री ]

सूर्याचन्द्रमसोरहर्दिवमगात्कालो महान्भ्राम्यतो-
जीवानां तु वयो विधातृविहितं स्वल्पं भवाम्भोनिधौ ।
यावन्नः किल भालपट्टलिखितं भोग्यं विधात्रा धनं
तस्मादभ्यधिकं लभेमहि कथं स्वप्नेऽपि किं तृष्णया ॥१॥

द्रव्यं प्राक्तनपुण्यसंचयवशात्प्राप्तं जना भुञ्जते-
नल्पं सत्पुरुषो दरिद्रति परं त्वन्ये सदा दुर्भगाः ।
भोज्ये वस्तुनि संचितेऽप्यचलवत्किं तत्क्षुधा पीडिताः
शक्ता लेढुमरं प्रविश्य सदनं कौलेयका जिह्वया ॥२॥

आकिञ्चन्य-हता अटन्ति जठरं प्रातुं हि सर्वा दिश
आ सेतोस्तुहिनाचलावधि नरास्तृष्णाभिभूता भुवि ।

लब्धुं किं स्वपथेन नेदमवधि द्रव्यं यतेरञ्जनाः
किं स्वप्नेऽपि घटेत हन्त न हि तन्मुखाः स्मरन्त्यण्वपि ॥३॥
आढ्याकिंचनयोः प्रभेदविकलं सर्वान्तरङ्गाङ्गणे
क्रीडन्ती जनताविमोहनपरा कृत्स्नं जगद् व्याश्नुषे।
तृष्णे देवि शमादयो हि बहवः प्रत्यर्थिनस्तेऽनिशं
निर्मूलीकरणाय जाग्रति वृथा स्वत्वं न गर्वं वह ॥४॥
रेखान्तर्गतरिक्तकोष्ठनिवहान्संमुद्रितान्वर्भकैः
केचिद्भूरिधनेप्सया पिपुरति प्रज्ञोह्रितैरक्षरैः।
यः कश्चिल्लभतेऽप्रतीक्षितधनं चेत्काकतालीयक-
न्यायाद्धन्त भवन्ति खिन्नमनसः स्वल्पैः प्रसादैः परे ॥५॥
मेरुं स्वर्णमयं गदन्ति विबुधा अद्रिं तथा राजतं
कैलासं च तयोः प्रदानमपि किं तुष्ट्यै नराणामलम्।
वस्तूनां परिमाणकल्पनविधेः श्रान्तो ध्रुवं पद्मभू-
स्त्वत्ते नैकक्रतावाप्य विदधे तृष्णेऽमितां जामिताम् ॥६॥
विस्तीर्णां बहुवाहिनीं खनियुतां संपन्नकेदारिकां
रम्यां सर्ववसुंधरां निजवशे नेतुं त्वया प्रेरिताः।
राजानो यदि नित्यमेव कलहैस्तृष्णे जगत्क्षोभकाः
प्रादेशोदररक्षणव्यसनिनामस्मादृशां का कथा ॥७॥
अद्य श्वः कतिभिश्चिदेव दिवसैर्लप्स्ये प्रभूतं धनं
मत्वैवं स्वकजीविकार्थमवनौ केचिद्धनार्दर्जितान्।
स्वल्पं लोष्ठसमं क्षिरन्ति महति प्रत्याशया दुर्लभे
वैचित्र्यं किमिहान्यदस्ति धरणावाश्चर्यहेतुर्नृणाम् ॥८॥
त्वत्सेवाहतबुद्धयोऽपि जनकापायोद्यता बालिशाः
कुर्वन्तः कलहं चिराय वसुने शार्दूलवद्भ्रातृभिः।
दृश्यन्ते कति नेह घातुकगणा वंशे कलङ्कायिताः
कस्य क्षेमविधित्सयाऽत्र भवती तृष्णेऽसृजत्पद्मभूः ॥९॥

पालित्येन हतेऽपि मूर्ध्नि दशने रिक्तेऽपि तुण्डे दृशाः
प्रक्षीणेऽपि च पाटवेऽप्यपघने जीर्णेऽपि पुंसां भुवि।
कान्ताभूमिधनादिषु स्थिरतरां भ्रान्तिं प्रपन्नाऽनिशं
हन्तेदं जगदेव ते विलसितैस्तृष्णे पराभूयते ॥१०॥

## ॥ उपनिषदामद्वैतपरता ॥

काण्डद्वयात्मिकायां शुक्लयजुःसंहितायां प्रथमं कर्मकाण्डम्, यत्रोन-चत्वारिंशदध्याया वर्तन्ते, चत्वारिंशोऽध्यायस्तु ज्ञानकाण्डपद-वाच्यः, यत्राष्टादश मन्त्रा वर्तन्ते। अस्य च सहेतुसंसारोच्छेदकब्रह्म-ज्ञानजनकत्वाद् ब्रह्मप्रापकत्वाद्वोपनिषदिति सामान्यतः, "ईशावास्यमि"त्यु-पक्रम्य प्रवृत्तत्वादीशावास्योपनिषदिति विशेषतश्च प्रसिद्धिरस्ति ॥

इमामुपनिषदं व्याचक्षाणा भगवत्पादास्तु—प्रथमेन मन्त्रेण ब्रह्मविद्यायाः, द्वितीयेन कर्मयोगस्य च सामान्यतः प्रतिज्ञाम्, तृतीयेन कर्मनिन्दा-पुरस्सरं तुरीयम्—"अनेजदेकमि"त्यारभ्य "स पर्यगादि" त्यष्टममन्त्रान्तेन भागेन विशिष्य ब्रह्मविद्याम्, नवमादिभिश्चतुर्दशान्तैर्मन्त्रैरुपासनाकर्म-समुच्चयम्, तत्र मानुष-दैववित्तसाध्यं फलं प्रकृतिलयान्तं संसारगतिपद-वाच्यम्, तन्नाशेनामृतत्वं प्राप्तुमन्तकाले प्राप्ते पूषसविधे प्राप्तिद्वार-प्रार्थनम्, मुक्तिकाले, बद्धदृष्ट्या मरणकाले वा प्राणस्य विनोत्क्रमण-माध्यात्मिकवायुभावम्, पुनरप्यन्तकाले समीचीनं मार्गं दातुमग्निप्रार्थनं च तेन तेनावशिष्टेन मन्त्रेण प्रतिपादनीयं मन्यन्ते ॥

अत्र—उपक्रमे—ईशावास्यमिति मन्त्रेण—"मया ततमिदं सर्वं जग-दव्यक्तमूर्तिने"ति गीतार्थो विशदो भवति। "अनेजदेकम्" इति मन्त्रेणापि मध्यमेन—तस्य मनोवागाद्यतीतत्वेन "यतो वाचो निवर्तन्ते" "देवै-रत्रापि विचिकित्सितं पुरा" इति मन्त्रार्थो विशदीभवति। "अनेजदे-कमि"ति" मन्त्रेण तु—"मत्स्थानि सर्वभूतानि" इति "मया ततमि"ति श्लोकस्यापरांशो विशदीभवति। "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति"।

सर्वभूतेषु चात्मानं न ततो विजुगुप्सते । यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति मन्त्राभ्यामपि—"मत्स्थानि सर्वभूतानि" इत्यस्य परस्पराध्यासपरत्वम्, परस्पराध्यासेऽपि स्वरूपतः प्रपञ्चस्यैवाध्यासः, न तु चैतन्यस्य प्रपञ्चे ; तत्र चैतन्यसंसर्गमात्रस्यैवाध्यासात् । तत्र चात्ममात्रस्य सर्वदाऽवस्थानम्, नतु प्रपञ्चस्य ; तस्य ब्रह्मसाक्षात्कारबाध्यत्वात् । तथाच ब्रह्म-प्रपञ्चयोर्बाधायामेव सामानाधिकरण्यमिति सिद्धान्तोऽत्र विशदीभवति, तेन च "नच मत्स्थानि भूतानि" इति गीतार्थोऽपि विशदीभवति ॥

अत्र प्रथमेन मन्त्रेण संन्यासयोगः, ज्ञानयोगो वा, द्वितीयेन कर्मयोगश्च भिन्नभिन्नाधिकारिणमवलम्ब्य प्रतिपादित इति तयोर्विरोधः प्रतिपाद्यते । तथा च ज्ञानकर्मसमुच्चयवादो निरस्तो भवतीति ज्ञानकर्मासमुच्चयः प्रतिपाद्यते । अत एव तृतीयेन मन्त्रेण कर्मनिन्दाऽपि प्रतिपादितोपपद्यते । तत्र प्रथममन्त्रे ईशावास्यत्वम् "तेन त्यक्तेने"ति जगतस्त्यागश्च प्रतिपाद्यमानो वस्तुगत्या नेश्वरस्यापि जगता तादात्म्यमिति"—सर्वं खल्विदं ब्रह्मे"त्यादौ बाधायां सामानाधिकरण्यमित्यद्वैतप्रक्रियाऽपि सूच्यते । तथाच—ज्ञानकर्मासमुच्चयः, बाधायां सामानाधिकरण्यं च प्रथमद्वितीयतृतीयमन्त्रैः प्रतिपाद्यते ॥

तुरीयपञ्चमषष्ठसप्तमा मन्त्रास्तु—त्वंपदवाच्यार्थं तल्लक्ष्यार्थं च संकलयन्तः—"देवैरत्रापि विचिकित्सितं पुरा" इत्यादिमन्त्रप्रस्तुतासंसारिजीवस्वरूपमेव पारमार्थिकम्, इति कठवल्ल्येकवाक्यतां गमयन्ति । तेन च माण्डूक्योपनिषत्प्रतिपादितं जीवस्य तुरीयं शिवं रूपमपि संकलितं भवति, इति नाहंपदार्थो मुख्यो जीवात्मा, किन्तु मिथ्यात्मैवेति सूच्यते, इति अहमर्थानात्मतावादोऽद्वैताभिमतः संगृहीतो भवति ॥

"स पर्यगादि"त्यष्टमो मन्त्रस्तु—परविद्यायामिव निर्विशेषेणोपक्रम्य—"याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः" इति सविशेषेणोपसंहरन् अक्षरविद्यैकवाक्यतां भजति । अत्र "याथातथ्यतोऽर्थान् व्यदधात्

शाश्वतीभ्यः समाभ्यः" इति मन्त्रांशे समाशब्देन संवत्सराणां ग्रहणं प्रश्नोपनिषदः प्रथमप्रश्नप्रतिपादितं "संवत्सरो वा प्रजापतिः" "मासो वै प्रजापतिः" "अहोरात्रो वै प्रजापतिः, अन्नं वै प्रजापतिः" इति वाक्यसिद्धं प्रजापतिमादाय "तद्य ह वै प्रजापतिव्रतं चरन्ति येऽपि पुनरुत्पादयन्ते तेपामेवैष ब्रह्मलोकः" इत्यादिवाक्यप्रतिपादितब्रह्मलोकान्तसंसारगतिपर्यन्तमेव प्रपञ्चसत्यत्वम्, व्यवहारदशायामेव सत्यत्वमित्यद्वैतसिद्धान्तः संगृहीतो भवति। तेन च प्रश्नोपनिषदः प्रथमप्रश्नेनैकवाक्यता, ईश्वरसृष्टानामपि जगतां न परमार्थतः सत्यत्वमिति च फलति। सर्वथा तु प्रथमतत्त्वपदलक्ष्यार्थः, अनन्तरं तत्पदवाच्यार्थश्चाष्टमेन मन्त्रेण संगृह्यते। तेन च तुरीयादिनाऽष्टमान्तेन मन्त्रजातेन "तत्त्वमसी"ति महावाक्यार्थ एव संगृहीतो भवति। यत्र जीवब्रह्मणोरत्यन्ताभेदेनाभेदे सामानाधिकरण्यं विवक्ष्यते॥

अत्र प्रथमं "कुर्वन्नेवेहे"ति त्वंपदवाच्यार्थः, अनन्तर"मनेजदेकमि"ति तल्लक्ष्यार्थश्च संगृह्यते, इति त्वम्पदार्थव्यवस्थायामध्यारोपापवादप्रक्रिया, तत्पदार्थव्यवस्थापनावसरे तु अक्षरविद्यायामिव अपवादाध्यारोपप्रक्रिया च संकल्प्यते। अर्थक्रमात्—अध्यारोपापवादाभ्यामेव वस्तुनिर्णयो विवक्ष्यत इति तत्त्वम्। तत्राध्यारोपक्रियया ब्रह्मस्वरूपोपपादनेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्, अपवादाध्यारोपप्रक्रियया ब्रह्मस्वरूपोपपादनेन तु स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं मिथ्यात्वमिति च मिथ्यात्वभेदो विवक्ष्यते। तेन च सृष्टिप्रकरणेनोपसंहारेऽपि न प्रपञ्चसत्यत्वमिति फलति॥

तदेवम्—ब्रह्मप्रपञ्चयोर्बाधायां सामानाधिकरण्यम्, जीवब्रह्मणोस्त्वभेदे सामानाधिकरण्यम् यदि जीवोऽपि ब्रह्मकार्यो न मन्यते। इदमेवाभिप्रेत्य—"अवस्थितेरिति काशकृत्स्न" इति सूत्रम्॥

तैत्तिरीयोपनिषदि तु—अन्नमयादिरूपेणाध्यारोपितेनोपक्रमः, "ब्रह्मपुच्छमि"ति चिन्मात्ररूपेणोपसंहारः, एवं यतो वा इमानि भूतानीति सविशेष-

णोपक्रमः, "आनन्दो ब्रह्मेति व्यजानादि"ति निर्विशेषेणोपसंहार इति तत्त्वं-पदार्थयोरुभयोरप्यध्यारोपणोपपादनमाश्रियते ॥

यत्र पुनः सृष्टिप्रकरणमात्रेण सगुणस्यैव निर्देशः—आकाशादिवाक्येषु, तत्रापि—अन्यतरप्रक्रियाऽनुवादेऽपि पर्यवसानमेकत्रैव निर्विशेषे। अत एव —जगत्कारणत्वं ब्रह्मणो निर्विशेषस्य तटस्थलक्षणमिति मन्यते ॥

नवमादिमन्त्रैरुपासना-कर्मणोः समुच्चयो यो मन्यते, तेन नोपासना ब्रह्मविद्येति ज्ञाप्यते। "विकल्पोऽविशिष्टफलत्वादि" त्येकार्थकत्वे हि विकल्पो व्यवस्थापितः। अत्र तु ययोः समुच्चयो मन्यते, तयोः फलभेदो विवक्ष्यते इति समुचितयोस्तयोर्मध्ये कस्यापि न ब्रह्मविद्यात्वम्। एतेन—कर्मणामारादुपकारकत्वमिति वादोऽपि परास्तः; भिन्नफलताविरोधात्। सर्वथा तु नोपासनैव ब्रह्मविद्या, किन्तु तदतिरिक्तो ब्रह्मसाक्षात्कार एव ब्रह्मविद्येति प्रक्रिया सूच्यते। अत एव—"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक" इति वाक्ये ज्ञानमात्रेण सकलबन्धनिवृत्तिः प्रतिपाद्यते ॥

"वायुरनिलममृत"मिति षोडशेन मन्त्रेण विनोत्क्रमणममृतत्वप्राप्तिसूचनेन तु ब्रह्मलोकान्तसंसारगतिबहिर्भूतो मोक्ष इति गम्यते। तेन च —प्रश्नोपनिषदः षष्ठप्रश्नार्थषोडशकलपुरुषस्वरूपमपि संगृहीतं भवति ॥

ईशावास्योपनिषदि प्रतिपादितेषु विषयेषु एव केनाद्युपनिषदपि दृश्यमानौ तु—ब्रह्मणो ज्ञेयत्वमेव नोपास्यत्वम्, उपासना च न ब्रह्मविद्येत्ययमेकः—यत्र—"न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि। इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे" इत्यारभ्य प्रवृत्तानि—यद्वाचानभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" "यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादीनि वाक्यानि प्रमाणानि ॥

द्वितीयस्तु—"नैतद्देवा आप्नुवन् पूर्वमि"ति प्रतिपादितं देवैरपि दुर्विज्ञेयत्वम्, यदेवाधिकृत्य—"यदि मन्यसे सुवेदेति दहरमेवापि नूनम्।

त्वं वेत्थ ब्रह्मणो रूपं यदस्य देवेष्वथ नु मीमांस्यमेव ते, मन्ये विदितमि"ति वाक्यं मीमांस्यत्वोल्लेखपूर्वकं प्रवृत्तम्। कठवल्ली तु विशदमेवामुमर्थं "देवैरत्रापि विचिकित्सितं पुरे"ति वदन्तीति पूर्वमेवोपपादितम्। अत्र देवशब्देन त्वाधिकारिकपुरुषाणां शुद्धान्तःकरणानां वा ग्रहणात् सुकेश-सत्यकामगार्ग्याश्वलायनभार्गवकात्यायनानां मीमांसार्थं पिप्पलादसविधे गमनप्रश्नाद्युल्लेखात् प्रश्नोपनिषदप्यत्रानुकूलैव। अन्ते केनकठप्रश्नो-पनिषत्सु प्रथमो ज्ञानकर्मसमुच्चयादिवादो न परामृश्यते इति सत्यम्, तथाऽपि संसारिस्वरूपपरित्यागेनासंसार्यात्मस्वरूपप्रतिपादने प्रपञ्चमिथ्यात्वप्रतिपादने तत्त्वंपदलक्ष्यार्थ एव शास्त्रसमाप्तौ चैकमत्यमेव॥

अत्र—"विद्यां चाविद्यां च" "संभूतिं च विनाशं चे"ति हिरण्य-गर्भलोकान्ता संसारगतिरिति यत्प्रतिपाद्यते, तदेव प्रश्नोपनिषदि प्रथमप्रश्ने-नापि निरूप्यते। यच्च पुनः—"वायुरनिलमि"ति प्राणस्याधिदैवते वायावेव लयो मुक्तौ प्रतिपाद्यते, तदेव षष्ठप्रश्ने "पुरुषायणाः पुरुषं प्राप्यास्तं यन्ति" इति प्राणादीनां सर्वेषामपि परमात्मन्येव लयप्रतिपादनेन विशदीक्रियते। तथा च—"तानि परे तथा ह्याह हि"त्यस्य पृथगधिकरणत्ववादो विषयान्तर-मादायेति भगवत्पादभाष्यमप्युपपद्यते। अनुत्क्रान्तौ हि प्राणादीनां षोडशकलानां मुक्तौ कुत्र लयः—किं प्रकृतौ, उताऽऽत्मनीति संशयनिरा-करणार्थं खलु तदधिकरणम्। सर्वथा—ईशावास्योपनिषदोऽद्वैतसिद्धान्त एव बहूनामुपनिषदामसन्दिग्धानामेकवाक्यता भवति॥

अत्रेशावास्योपनिषदि—न किमपि वाक्यं सन्दिग्धम्, अत एव न तामधिकृत्यैकमप्यधिकरणमुत्तरमीमांसायाम्। "यस्मिन् सर्वाणि भूतान्यात्मै-वाभूद्विजानतः" इति सर्वभूतान्युद्दिश्यात्मस्वरूपमात्रता या बोधिता, सा हि शरीरशरीरिभावेन सामानाधिकरण्यं नाभिप्रैति। अत्र सर्वेषां भूतानां शरीरताया अप्रतिपादनात्। "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानमि"ति आत्मनीति सप्तम्यन्तेनात्मनोऽधिष्ठानत्वबोधनं सर्वभूतशरीरतापरताया विरोधि। "सर्वभूतेषु चात्मानम्" इति चशब्द-

प्रयोगस्तु—परस्पराध्यासपक्षमेव पोषयति । "एकत्वमनुपश्यतः" इत्येकता-दर्शनस्यैव मोक्षसाधनत्वमित्येकशब्दप्रयोगस्तु लेशतोऽपि द्वैतवादं न सहते । तत्र हि आत्मनीति त्वंपदलक्ष्यार्थ एव गृह्यत, इति तस्यास्मदादिशरीरेण सशरीरत्वं न सार्वदिकमिति, अशरीरस्यैवासांसारिण आत्मनो निर्देश इति स्वीकर्तव्यम् । "इदं भस्मान्तं शरीरम्" इति मन्त्रांशस्तु विशदयतीममर्थम् । इदं तु दृष्टान्तार्थम्, तेन च सूक्ष्मशरीरस्यापि "ज्ञानाग्निः सर्वकर्माणी"ति न्यायाद् ज्ञानेन बाधोऽप्यत्र विवक्ष्यत इति वक्तव्यम् । तथा च केवला द्वैतवाद एवोक्तोपनिषदर्थः ॥

अत्र श्रीभाष्यमते—ज्ञानकर्मसमुच्चयवादः, "सर्वाणि भूतान्यात्मनि" "सर्वभूतेषु चात्मानमि"ति परस्पराधिष्ठानतोल्लेखः, प्रथमत आत्मव्यतिरेकेण सर्वभूतनिषेधः, अनन्तरमेवाकायत्वादिना ब्रह्मणोऽप्यशरीरत्वेनोल्लेख इत्यादिकम्, याथातथ्यतोऽर्थान् इति याथातथ्यभावस्य "शाश्वतीभ्यः समाभ्य" इति सीमानिर्देशः, कर्मत्यागिनामेव ब्रह्मविद्योपदेशः "तेन त्यक्तेन" तिवाक्यावगतः, "वायुरनिलमि"ति विनोत्क्रमणं मुक्तिनिरूपणं च नोपपद्यते, यद्यद्वैताभिमतं विवरणमभिप्रेयेत । अतो भगवद्रामानुजाचार्यानुयायिनोऽन्य-थैवेमामुपनिषदं व्याचक्षते ॥

तद्यथा—निगमान्तदेशिकविवरणे हि ईशावास्योपनिषत्सम्बन्धिनि—प्रथमो मन्त्रो भगवत्पादमत इवैव प्रायेण व्याख्यातः, इयान् विशेषः—यद् ईशावास्यमितीश-शब्देन रुद्रादिव्यावृत्तो नारायणो विवक्ष्यते, वास्यत्वं च शरीरतयेति शरीरशरीरिभावो विवक्ष्यत इति चैतेषां विवरणम्, भगव-त्पादानां तु सर्वत्र विवर्तकारणविधयाऽनुगमेनेति । तत्र प्रथमे मते—"तेन त्यक्तेने"त्यत्र त्यागे न निमित्तमुपनिषदि प्रतीयते, द्वितीये तु ब्रह्मविवर्त-त्वेनैव मिथ्यात्वोपदर्शनात् तन्निमित्तमपि सूच्यत इति विशेषः । "मया त्यक्त-मि"तिगीतार्थ एवोभयत्र विवक्षित इति तु समानम् । श्रीकूरनारायणभाष्य-मप्यमुमेवार्थं मन्यते ।

( क्रमशः )

सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः




संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| December, 1942 | १८६४-शकीये अग्रहायणे २५श-वर्षस्य ८म-संख्या | Vol. XXV No. 8 |

## संस्कृत-नाटकानि

( पूर्वानुवृत्तिः )

[ निबन्धकः—वि. कृष्णस्वाम्यय्यङ्गार्यः ]

दुष्यन्तस्य नायकस्यापि पात्रं धार्मिकच्छद्मान्यन्तर्हितशोभं न विमर्शकानां प्रशंसापात्रम् । स्यादेतत् । पुराणकथानामुपादाने हि पुराणावलोकनैर्वो विदितभाविवृत्तान्ताभिनयः प्रेक्षकः कथाभागस्याश्रुतपूर्वत्वरूपाकर्षकत्वाभावात् निवृत्तकुतूहलो रसभंगादनवाप्यमानसोल्लासः, सम्यगभिनयतेऽपि नटवर्गाय क्रुध्यति । कथायाः पूर्वमेव परिचयाद्धि प्रथमतया पठने प्रवर्त्तमानस्यापि

पुंसश्चमत्कारानुपधानाद्वान्नवंगुरुत्वं संभवति। यद्यपि विलक्षणप्रतिभा-सम्पत्तेरनुग्रहेण प्रख्यातमप्यपूर्वमिव प्रतिभासमानं परिवर्तितरूपमितिवृत्त-मुपाददानाः स्वीयेन भाषाप्रौढिम्ना वर्णनापाटवेन संविधानरचनाकौशलेन च चमत्कारकारि परिपुष्ट-रसास्वादमधुरं नाटकं विनिर्मिमते महाकवयः, तथापि पूर्वोक्तेनानेन नियमेन साधारणानां कविताकीर्तिकामुकानां कल्पनाशक्तिविशिष्टानामपि कवीनां नाटकलेखने प्रवृत्तिर्विहन्यते। अत एव तादृशाः शृंखलाबन्धनरूपा नियमास्साहित्यस्याभिवृद्धौ बाधका एवेति विद्वांसः प्रतिपादयन्ति। अरिस्टोटलस्य कालात्प्राक् ग्रीकसाहित्ये नाटकविभागो नितरामभिवृद्धिमध्यारोहत। ईस्किलस, सापोक्लीस, यूरिपीडीस्नामकास्त्रयो महाकवयो ग्रीक्नाटककलाया: प्राणप्रतिष्ठापका-चार्याः। रुद्रनाटके (Tragedy) पुनैतषां निर्माणशक्तिर्जगन्ति विस्मापया-मास। दुःखान्तनाटकानां प्रयोगादपि सामाजिकानामानन्दमुपजनय्य कृतकृत्यास्समवर्तन्त ग्रीकनाटकाचार्यास्त्रयोऽप्येते। क्रि॰ श॰ चतुर्थशतके प्लेटोऽरिस्टोटलाभ्यां गुरुशिष्याभ्यामुभाभ्यामपि काव्यवेदान्तादयो विद्यास्थानतया परिगणितास्सर्वेऽपि विषया वादभूमिमवतार्य विसृष्टाः। गुरुः प्लेटोमहाशयो नाटकानां विषये स्वाभिप्रायमेवं प्राचीकटत् "तत्त्व-दृष्टिरेव जगतां दुःखक्षये कारणम्। अज्ञानपाशबद्धा आत्मानः किमपि कर्तव्यमस्वीकुर्वन्तः संविज्ञानाभिध्यानस्य तत्त्वाकलनस्य विरहादन्ततो दुर्गतिमधिगच्छन्ति। निःश्रेयसलाभाय प्रयतमानेन पुरुषेणावश्यमेव तत्त्वानि विविच्य विभज्य विमृश्य विज्ञातव्यानि। काव्याभ्यासश्चात्र तत्त्वदृष्टेः प्रसरणं प्रतिबध्नाति। कवीनां कल्पनयाविष्कृतो हि सुखानन्द-मयो मिथ्याप्रपञ्चः। रागद्वेषादीनां मनश्चांचल्यस्य रूपान्तराणामभिनया-दिना प्रदर्शनादस्मारिते स्वकीये दौर्बल्ये (weakness of mind) धार्मिकीं प्रवृत्तिं रसिको नानुजानीते, इष्टफलावाप्तेरसंशयितत्वात्। मानवस्य चारित्र-शुद्धिरक्षणेऽपि नाटकदर्शनादिजन्मानः प्रत्यक्षमुपलक्षितमहिमानो गुप्ता भावाः प्राकाश्यमानीयमानाः 'प्रतिबन्धमाचरन्ति'। शृंगारक्रियामवेक्षमाणो हि

पुमानिसर्गवशादुद्रिक्तकामनावासनो दुष्कार्येषु प्रवर्तेत । न हि सर्वोऽपि महर्षि-तुल्यो निगृहीतेन्द्रियो भवत्प्रतिबन्धकानीमानि दुष्टशक्तिसहकृतानि काव्यादीन्युद्बोधकोपकरणान्युपेक्ष्य निःश्रेयसमवाप्तुं तदर्थमुद्योक्तुं वा प्रभविष्यति । अराष्ट्रदेशीयानां नैतिकप्रगतिविमानि काव्यानि कामिनी-शृंगारवर्णनपराणि महान्तं प्रतिरोधमाचरन्ति । तत्रापि दृश्यरूपतया प्रेक्षकाणां मनसि परिणामकारीणि (effective) नाटकानि सज्जनैर्बहिष्करणी-यानी"ति । तस्य शिष्यः पुनररिस्टोटलो विमर्शांगे गुरुमत्यशेत । तस्यासौ प्रतिपादः "काव्यानि मनोरञ्जनायावश्यकानि । कविकल्पितस्य भावना-प्रपञ्चस्य मिथ्यात्वमात्रेण तत्रादरपरित्यागस्य निर्युक्तिकत्वात् । न हि मिथ्यात्वज्ञानमानन्दानुभवे प्रतिबन्धकम् । मानवसामान्यस्य प्रवृत्तिरपि न महाकार्यनिर्वर्तने ध्येयसाधने वा, अपि तु सन्तोषानुभव एव । आनन्दा-वाप्तेश्च काव्यपठनादिनापि दर्शनात्तत्र प्रवृत्तिर्दुर्वारा । तत्तदृष्टिर्हि नाटकीयं जगन्मिथ्या न सत्यमिति निवेदयन्ती नैतिकीं प्रगतिं साधयितुमलम् । आहार्यज्ञानस्य प्रमात्मकतत्त्वदृष्टिविरोधित्वासंगतेः । रागद्वेषादीनां मनस-श्चाञ्चल्यस्य रूपान्तराणामभिनयादपि रसोद्बोधमात्रमुपजायते, न तु तन्मूलको दुष्टवासनापरिग्रहः । स्वार्थत्यागप्रशंसनीयानां महानुभावानां जीवनचरितानि नाटकरूपेण कविभिर्विस्तृतानि पठित्वाऽवलोक्य च मानवानां सात्त्विकभावोद्रेकसम्भवाच्च । तस्मादसत्काव्यानि परिहृत्योत्तम-वस्तून्युपादाय लिखितानां काव्यनाटकादीनां पुरस्कारो न दोषाय, प्रत्युत गुणातिशयायैवोपकल्पते । विश्वव्यापिनीं सहानुभूतिं (Sympathy) पापभीतिं सर्वत्र निर्विशेषं प्रेम देवभक्तिं च काव्यान्युपजनयन्ति । शुष्को-पदेशेषु प्रदर्शितावज्ञा युवानोऽपि रुचिराभिः काव्यशैल्यां वर्ण्यमानाभिः कथाभिराकृष्टचित्ता गृहीतनीतयस्सन्मार्गमवलम्बेरन् । चित्तशुद्धिश्च कल्मषाणामपहरणादनन्तरमेवावकाशं लभते । कुत्सितभावनानामपचयश्च नाटकदर्शनादिना पदे पदे दत्तोत्तेजनैस्सुसंस्कारैरेव । तस्मात्काव्यमप्य-स्माकमादरणीयमेव" इति । एषा च वादशैली भारतीयानामसत्काव्य-

विषयकतया सङ्कोचितं 'काव्यालापांश्च वर्जयेत्'इति प्रतिषेधः काव्यशोभा वशीकृतचित्तानां प्रशंसापरं 'नानृषिः कुरुते काव्य' मित्यमुमानन्दोद्गारमपि स्मारयति। एतावता च ग्रीकैरपि महापुरुषचरितस्यैव काव्यकथारूपतयोपादानं न्याय्यमिति स्पष्टमुपपादितम्। अत एव प्राथमिकानि ग्रीकनाटकानि देवतोपासनारूपाण्येवाविर्बभूवुः। डायोनिसस्नाम्न्या देवतायाः कथा एव नाटकानामितिवृत्तानि विपर्यणंसिषुः। क्रमेण देवतान्तरवृत्तान्तानामप्युपनिबन्धोऽभ्यनुजज्ञ। रुद्रनाटकानां प्रादुर्भावोऽपि तदैव निरपद्यत। एतावता कालेनोत्कर्षस्य परां काष्ठामुपारूढं ग्रीकनाटकसाहित्यं प्रकृतिनियमानुरोधेनैव क्रमादवनतिमार्गं पदं निदधौ। तृतीयाच्छतका (A.D.) दारभ्य षष्ठशतकपर्यन्तं नाटकानां लक्षणान्येव निरमीयन्त, न तु लक्ष्याणि नाटकानि। एष च कालो लक्षण-युगमित्यङ्गीक्रियते। अलक्सान्दरस्य भारतविजयानन्तरमलक्सान्द्रियानगरं ग्रीकसंस्कृतेः प्रधानं केन्द्रमभवत्। यत्र समवेता विमर्शका विद्वांसो विवादराहुग्रस्ताः परस्परं कलहायमाना दुरनुष्ठानाननावश्यकानन्यायान्नियमानाविष्कुर्वन्तो नाटकनिर्माणकलायाश्चरमगीतमपठिषुः। अतिचर्चा नाम हिमानी साहित्यसूर्यमाच्छादयामास। स पुनस्स्वयंप्रकाशो ज्योतिषामीश्वरस्सूर्यः प्रकृते चर्चा-हिमावरणं कथंचित्परिहृत्याङ्ग्लनाटकेषु भृशं विराजते। एवमेव संस्कृतभाषायामपि नियमबाहुल्यात्सृष्टिकर्तारो विरलास्समभूवन्, येन नाटकसाहित्यमास्माकीनमपि नव दश वा शृंगग्राहिकया निर्देष्टुं शक्यानि नाटकानि विना न किमप्यधिकमनर्घ्यं रत्नं प्रादुरकार्षीत्। एवमेव प्रख्यातमितिवृत्तमुपादेयमित्यादयोऽनावश्यका नियमा निष्कारणमंगीकृता इति खिद्यते भाषाप्रेमिणा हृदयम्।

( क्रमशः )

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

सुशोभितानावसथान् नयाम्यहं
विचूर्णतां वृक्षलतादिसञ्चयान् ॥४९॥
समुच्छलद्वारिलरङ्गरूपधृक्
समस्तवस्तूनि निमज्जयाम्यहम् ।
नीरप्रवाहैः परितः परिप्लुतो
न कोऽपि तत्रासुविधारणे क्षमः ॥५०॥
उपद्रुता यावदशेषपातकै-
र्भवन्ति दोषैरखिला जनाश्रयाः ।
तदोद्धता मारकरोगरूपताम्
उपेत्य सर्वान् विषयान् विनाशये ॥५१॥
न बान्धवो रक्षति दैवनिग्रहान्-
न वित्तराशिः कुरुते सहायताम् ।
विरूपतामेति हितार्थतत्परः
परःशतानां विपदां सदोदयः ॥५२॥
तदत्र लुप्तप्रतिपक्षसम्पदो
न मे समः कोऽपि मतो जगत्त्रये ।
विमूढचेता न भवानमूदृशीं
जनोत्तरां शक्तिमवैति मामिकाम् ॥५३॥
विनापराधं मम भक्त उत्तमो
महीगृहे लक्षपतिः प्रवेशितः ।
सुतापनिस्तस्य च तादृशो वणिक्
त्वया मदान्धेन विना विचारणाम् ॥५४॥
न राजनीतिं ननु वेत्सि दुर्गमाम्
अदण्डनीयो यदयं खलीकृतः ।
न दण्डनीयस्य विमोक्षणं तथा
यथा सतो दण्डविधिर्हि पाप्मने ॥५५॥

यथा तथा वास्तु विमुच्यतामयं
नकालहीनं ससुतापतिस्त्वया ।
स्वयं न विज्ञातमिदं मयोदितं
समीक्ष्यतां मध्यमतामुपेयुषा ॥५६॥

विदन्ति दोषं स्वत एव सत्तमाः
परोपदिष्टं प्रतियन्ति मध्यमाः ।
परोपदेशैरपि ये न जानते
नराधमास्ते कठिनाश्मसन्निभाः ॥५७॥

सुखेन सुप्तिं समुपागतो भवान्
महार्घपर्यङ्कतले सुकोमले ।
मदीयभक्तस्तु महीगृहान्तरे
कष्टं कियद्वा सहतेऽतिमानुषम् ॥५८॥

अकालहीनं यदि तस्य मोक्षणं
त्वया न साध्येत विरुद्धकारिणा ।
तदानुरूपं फलमस्य कर्मणो
मया प्रदत्तं ध्रुवमत्र लप्स्यते ॥५९॥

हुताशनो धक्ष्यति राजमन्दिरं
तथापरान् पत्तनवर्त्तिनो गृहान् ।
प्रजाः प्रयास्यन्ति समा यमक्षयं
कुलं विनष्टं भविता तव क्षणात् ॥६०॥

भवन्तमेतं महिषीसमन्वितम्
गदाभिघातेन निहत्य साम्प्रतम् ।
करोमि लोकं मम भक्तवैरिणा
विनाकृतं दुष्कृतकूटकारिणा ॥६१॥

स्वमङ्गलं मूढ यदि त्वयेष्यते
न काम्यते राज्यमिदं तथा हृतम् ।

ततः स्वयं सम्प्रति वैश्यवंशजौ
विमोच्य चित्तं लघु म प्रतोष्यताम् ॥६२॥
धनं प्रभूतं मुदितेन दीयतां
समर्चया वैश्यवराय सत्वरम् ।
यथा स तोषं समुपैति मानसे
तथा तथा कृत्यचयः प्रवर्त्यताम् ॥६३॥
तरी तदीया तव राज्यवासिना
हृतोत्तमर्णेन विचित्य दीयताम् ।
ततः परं स्वीयनिकेतनं प्रति
प्रस्थाप्यतामेष वितीर्णवैभवः ॥६४॥
एवं सरोषं वचनं रमापते-
र्निशम्य दृष्ट्वा च गदां समुद्यताम् ।
वपुस्तथा वीक्ष्य कृतान्तभीषणं
जगाद भीत्या परिकम्पितं वचः ॥६५॥
क्षमस्व हे नाथ मयाऽविजानता
भक्तोत्तमस्ते नितरां विदूषितः ।
कुरुष्व कारुण्यसुधाभिषेचनं
जहीहि कोपं मयि पादसेवके ॥६६॥
भवन्निदेशामृतभानुसङ्गमात्
तमो विनष्टं हृदयं प्रदीपितम् ।
तदद्य बुद्ध्वा निजदूषणोच्चयं
प्रमार्जये देहि कृपालवं विभो ॥६७॥
नमोऽस्तु सृष्टिस्थितिनाशहेतवे
जगत्त्रयव्याप्तिमते महार्चिषे ।
प्रभो गदां संहृणु मा रुषं कृथा-
स्त्वमुग्ररूपं कृपया त्यज द्रुतम् ॥६८॥

ज्वलन्ति ते नेत्रयुगे महात्विषो
दिवाकरा द्वादश भीमभूतयः ।
महाभयं संहननं प्रपश्यतो
ममासवो दूरमिवोद्व्रजन्त्यमी ॥६९॥
राज्यं न मे ध्वंसय कोपवह्निना
न मे प्रियां प्रापय दुःखदुर्विधाम् ।
कुलस्य मे वर्तय मङ्गलस्थितिं
प्रसादये त्वा भगवन् नमोऽस्तु ते ॥७०॥
अयं मया लक्षपतिः प्रमुच्यते
सुतापतिस्तस्य च शीलशोभितः ।
विधीयते देव समर्चनं तयो-
र्भवन्निदेशानुगुणं हिताय नः ॥७१॥
तदेष शान्तिं श्रय देव सत्वरं
कोपारुणं शीतय लोचनद्वयम् ।
गदामधो लम्भय लम्भयाभयं
भयेन मूढोऽस्मि परं दयस्व मे ॥७२॥
श्रीसत्यदेवं प्रति वाचमीदृशीं
प्रकुर्वतः स्वप्नदशा व्यपासरत् ।
विकम्पिताङ्गं पुलकाञ्चितं दधत्
प्राबोधयत् स्वां महिषीं महीपतिः ॥७३॥
स स्वप्नवृत्तान्तममूं व्यजिज्ञपत्
निःशेषरूपामपि सत्यभारतीम् ।
प्रातः समासाद्य तदैव भूगृहे
स्वयं वणिग्युग्ममगच्छदाकुलः ॥७४॥
वणिग्युगेनापि तदावलोकितः
श्रीसत्यदेवः प्रियशान्तविग्रहः

स्वप्ने वदंल्लक्ष्मपते भजाभयं
विमुच्यसे मत्प्रभुताप्रसादतः ॥७५॥
जहीहि निद्रां जडता त्यज द्रुतं
रामेति राजा युवयोर्विमुक्तये ।
तुष्टिं गतोऽहं भवता कृतस्तुति-
र्यतस्त्व गन्तुं त्वरितं स्वपत्तनं ॥७६॥
निशम्य देवस्य वचो हि यावता
वणिग्वरो नेत्रयुगं न्यमीलयत् ।
स तावतंवोपददर्श विस्मितो
महीगृहद्वारि नृपं जनान्वितम् ॥७७॥
सुप्तोत्थितं लक्ष्मपतिं स भूपतिः
प्रणम्य भक्त्या समवोचतादरात् ।
मया कृतं वैश्यपते सुदुष्कृतं
दयापरः क्षन्तुमिह त्वमर्हसि ॥७८॥
भवानसामान्यगुणामृतोदधिः
कृपासमुद्रेण हरेः सुसङ्गतः ।
समानधर्मा रामवेति सर्वतो
न कूपसामुद्रिकयुक्तिरीक्षिता ॥७९॥
विनाऽपराधं युवयोः प्रपीडनान-
महापराधोऽस्मि विमूढमानसः ।
क्षमामतस्त्वामिह भिक्षते जन-
स्तव क्षमैवाद्य ममावलम्बनम् ॥८०॥
तदेष ते पादयुगे नमाम्यहं
वहामि ते पादरजः शिरोगतम् ।
तिरोहितं मे दृशि पातकं महत्
प्रसादमाधत्स्व कृतोऽयमञ्जलिः ॥८१॥

नान्तःप्रसादस्तव यावदीक्ष्यते
न तावदायाति ममान्तरस्थितिः ।
त्वदीयकोपादिव देव रावतो
जगन्मया वह्निमयं समीक्ष्यते ॥८२॥
प्रसीद सत्यं नय सुप्रसन्नता
यतो मदीयं भविता शुभं परम् ।
अलङ्कुरु प्रेमपरो नृपासनं
योग्यो भवानेव नृपोऽत्र पत्तने ॥८३॥
चिरादहन्ते पदसेवने रतः
शुभानि लप्स्ये नितरामबाधितम् ।
देवद्विजानां निजभक्तपूजनं
स्वपूजनादप्यधिकं मुदास्पदम् ॥८४॥
विधाय वाचं विरते महीपतौ
विनीतवृत्तः समुवाच वैश्यराट् ।
वसुन्धराधीश वचस्तथाविधं
निगद्य किं मामपराधिनं व्यधाः ॥८५॥
अशेषदिक्पालकलाभवो भवान्
अहन्तु सामान्यगुणो वणिग्जनः ।
न जम्बुकानां सविधे हि शोभते
तरस्विनां केशरिणां नतिक्रिया ॥८६॥
श्रीसत्यदेवस्य कृपा चिरन्तनी
त्वय्यस्ति राजा कथमन्यथा भवान् ।
न दैवकारुण्यविनाकृतो जनः
सुखास्पदं राजपदं प्रपद्यते ॥८७॥
पुण्येन राज्ञां प्रकृतिः सुखे स्थिता
धरा च सूते बहु शस्यमन्वहम् ।

अकालमृत्युर्न च जायते क्वचित्
तंरत्र पुण्यं तव शाश्वसाधनम् ।।८८।।
भवान् द्वितीयद्विजवंशसम्भव-
स्तृतीयजोऽहं न ततोऽपि किं लघुः ।
अतोऽहमात्मानमवैमि पापिनं
यतो नतिं मे चरणे भवानदात् ।।८९।।
स्वदोषशुद्ध्यर्थमतो मयाधुना
किमेव कार्यं नहि तत् प्रबुध्यते ।
परःसहस्रा नतयः प्रसाधिता
भवत्पदे पापलयं प्रकुर्वताम् ।।९०।।
विनापि दोषं यदहं प्रवेशितो
महीगृहे तत्र न दोषभाग् भवान् ।
न वा वराकास्तव भूप यामिका-
स्तत् सत्यदेवस्य हि विस्मृतेः फलम् ।।९१।।
स हि प्रसूनादपि भूरिकोमलः
क्रियाप्रभेदात् कुलिशाच्च कर्कशः ।
स्मृत्यस्मृतिभ्यामत एव साम्प्रतं
मया स देवो द्विविधो विलोक्यते ।।९२।।
स पूजितः पूर्वमभून्मदिष्टदः
परत्र चानिष्टमसूत विस्मृतः ।
पुनः स्मृतोऽसौ दुरदृष्टसंक्षयाद्
भवन्तमेनं किमु नो नियुक्तवान् ।।९३।।
तदत्र कौतूहलमस्ति मे महत्
कथं स देवो भवतो नियोजकः ।
किमेष यातो नयनस्य गोचरं
किं वान्यथादेशवचोऽव्यसर्जयत् ।।९४।।

आकर्ण्य तद्वाक्यमथो नृपोऽब्रवीत
कृतज्ञता भद्र भजे त्वदन्तिके ।
यदेव देवैरपि दुर्लभेक्षण
क्षणं मया स्व . लोऽपि वीक्षितः ॥९५॥

अनिष्टमेतद् भवदीयबन्धनं
महीगृहे भूरिशुभाय कल्पते ।
विषं विकारे सति साम्निपातिके
सुधासमं जीवनशक्तिवर्द्धकम् ॥९६॥

तदर्चनादाधु भवतो मनोरथं
यथा दिशा तामिह शिक्षयस्व मा. ।
अहं तथा सत्यममुं प्रभुश्रये
प्रचारये सर्वत एव पत्तने ॥९७॥

ततः स वैश्यो वसुधापतिं प्रति
प्रोवाच सत्यार्चनरीतिमादितः ।
नृप. प्रतिज्ञामकरोत समादरात
सत्यार्चनाया प्रतिमासमुत्सवैः ॥९८॥

अथ वणिगधिनाथो भूपतेः प्रार्थनाभिः
सुचिरममरमान्यं सत्यमाधाय चित्ते ।
सह निजतनुजाया. प्राणकान्तेन हृष्टो
धरणिगृहमहासीत पूजितो राजलोकैः ॥९९॥

नरपतिरपि कोषाध्यक्षमादिक्षदस्मै
प्रचुरविभवदाने कालहानिं विनैव ।
सुपरिगतविशेषां नावमानाय्य पूर्वाम्
ऋणमिव सुगृहीतं शोधयित्वाप तुष्टिम् ।१००॥

तदखिलमतिलोकं वृत्तमागात प्रचारं
यदिह नृपतिराप्तः सत्प्रयोगेन सत्यम् ।

January, 1943 Reg. No. C. 1073

महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः




संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# श्रीसंस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥



| | | |
|---|---|---|
| January, 1943 | १८६४-शकीये पौषे<br>२५श-वर्षस्य ६म-संख्या | Vol. XXV<br>No. 9 |



## उपनिषदामद्वैतपरता

( पूर्वानुवृत्तिः )

द्वितीयमन्त्रव्याख्याने तु—"यत कुर्वन्नेवेह कर्माणीत्ययं विधिराविद्वद्विषय एव, न ब्रह्मविद्विषयः ; तस्य विधिनिषेधशास्त्रवश्यत्वाभावात्, तस्य ब्रह्मज्ञानाग्निनाऽधिकारः प्रनष्ट" इति शांकरं व्याख्यानम्, तत्प्रकरणाविरुद्धम्, विद्यां चाविद्यां च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते, इत्युपरितनविध्यन्तरविरुद्धं च मन्वानाः कूरनारायणा वेदान्तदेशिकाश्च—द्वितीयमन्त्रे एवं विरक्तस्य विदुषः फलसङ्गकर्तृत्वादिविमुक्तो ब्रह्मविद्याङ्गभूतः 'कर्मयोगो' यावज्जीवमनुष्ठेय, इति तात्पर्यं मन्यन्ते। एतेन्मते—जिजीविषेदित्यस्य जीवेदिति विवरणम् विद्यां चेत्युपरितनमन्त्रेऽङ्गत्वेन विहितस्य कर्मणः समुच्चयसूचकस्य

प्रयोगानुपपत्तिः, त्यक्तेनेति वैकुण्ठपर्यन्तस्य भोगो विरागप्रतिपादनायोगः, ब्रह्मविद्याप्रकरणे कर्मयोगस्याप्रकृतत्वादप्रकृतार्थकल्पनापत्तिश्च दूषणम्। अद्वैतमते तु—कुर्वन्नेवेह कर्माणीत्यनुवादो ब्रह्मविद्यास्तुत्यर्थ इति न प्रकरणविरोधः, विद्या चाविद्या चेति कर्मोपासनयोः समुच्चयेऽपि ब्रह्मविद्याकर्मणोरसमुच्चयस्याङ्गाङ्गिभावस्य वाऽऽविवक्षणाद्योगानुपपत्तिः, सर्वापेक्षा चेति सूत्रे तद्विषयवाक्ये—"यज्ञेन दानेने"ति वाक्ये च यज्ञादीनां विद्यासाधनत्वे प्रतिपादितेऽपि तयोः सहानुष्ठानं समुच्चयपक्षो वा सहशब्दावगतो न विवक्षितः, इति तयोर्भिन्नविषयत्वान्नैकवाक्यता चेति न कोऽपि विरोध इति मन्यते। पुरुषार्थाधिकरणे—"स्तुतयेऽनुमतिर्वे"ति "कुर्वन्नेवे"त्यादीना यत् स्तुत्यर्थत्वेन न विधौ तात्पर्यमिति निरूपितम्, तदपि तु अद्वैतसिद्धान्तमेव पोषयति। अतः सौत्रमपि विवरणमद्वैतिनामेव ॥

अत एव—"असुर्या नाम ते लोका" इति तृतीयो मन्त्रः सङ्गच्छते, येन विदुषा निन्दाद्वारा विद्यायाः स्तुतिः प्रस्तूयते। अयमेवार्थः श्रीभाष्यानुयायिभिरपि स्वीक्रियते। मन्त्रद्वयेऽपि "अनन्दा नाम ते लोका अन्धेन तमसा वृता" इति बृहदारण्यकवचनेनैकवाक्यताऽपि मन्यते ॥

इदमेवात्रालोचनीयम्—किमिति द्वितीयेन मन्त्रेण कर्मयोगमुपक्रम्य "विद्यां चाविद्यां चे"त्यनुपक्रम्याकस्मादविदुषो निन्दा क्रियते, कर्मयोगिनोऽप्यविद्वांसो न भवेयुरिति च। वयं तु पश्यामः—कर्मयोगिनामप्यविद्वत्तासामान्यादत्र निन्दाद्वारा संन्यासयोगः, तत्साध्यो ज्ञानयोगश्चैवात्र स्तूयते, तत्र प्रवर्तनार्थमिति ॥

तुरीयपञ्चमषष्ठमन्त्रा ब्रह्मणो विचित्रशक्तियोगम्, सर्वस्य शरीरशरीरिभावेन परमात्माधीनस्थितिकत्वेन च ब्रह्माभेदं च प्रतिपादयन्तीति मन्यमानाः श्रीभाष्यानुयायिनस्तु—मत्स्थानि सर्वभूतानि, न च मत्स्थानि भूतानि पश्य मे योगमैश्वरमिति गीतार्थमेव संगृहीतमभिप्रयन्ति। तथाऽभिप्रयन्तश्चेमे—आत्मन्येवानुपश्यति, आत्मैवाभूत् एकत्वमनुपश्यतः इत्यादौ क्लिष्टकल्पनयैव योजनम् विशिष्टरूपेणैकत्वादिपरताश्रयणं

वा स्वीकुर्वन्ति। अद्वैतमते तु नैवम्। तत्र हि—पृथिव्याद्यवच्छिन्न-चैतन्यकार्याणामपि चैतन्यांश एवोपादानकारणम्, न पृथिव्याद्युपाध्यंश इति विवक्षयाऽऽत्मन्येवेत्येवकारः, आत्मैवाभूदित्यत्रापि अधिष्ठानमात्रसत्ता-बोधनेनैवकारः, एकत्वमनुपश्यत इत्येकत्वाज्ञानेन सर्वभूतान्यात्मनीति सामानाधिकरण्यस्यैक्यपरत्वम्, बाधापरत्वं वा, न तु शरीरशरीरिभाव-परत्वादिति विवक्षया—एकत्वमिति च स्वरसमुपपद्यते॥

एतेन अष्टमो मन्त्रोऽपि—व्याख्यातः। तत्र हि अकायपदं सर्वशरीर-कमपि कर्मशरीररहितपरतया श्रीभाष्यानुयायिनो विवृण्वते। न हि कुत्रापि स्पष्टं ब्रह्मणः सर्वशरीरकत्वं प्रतिपादितम्, इति अकायपदार्थे संकोचनं क्लिष्टतरमेव। अतः शरीरसामान्यराहित्यमेवात्र प्रतिपादनीय-मद्वैतिनो मन्यन्ते। याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्य इति मन्त्रांशस्तु—ब्रह्मप्राप्तिपर्यन्तं प्रलयकालपर्यन्तं वा प्रपञ्चसत्त्वमेव प्रतिपाद-यतीत्येव मतद्वयेऽपि विवक्ष्यते। अयमेव विशेषः—प्रलयो नामात्यन्ति-कोऽपि तुरीयोऽविद्यानाशेन मोक्षं वदेत इति तन्नाशे प्राकृतानां सर्वेषामपि नाशो बाधो वा वर्तत इत्यद्वैतिनो मन्यन्ते, इतश्च नोपादाननाशप्रयुक्तः प्रपञ्चनाशः संभवति उपादानस्य प्रकृतेर्नित्यतायास्तन्मते स्वीकारात्। तत्र भगवत्पादभाष्यदृष्ट्या समापदेन प्रजापतीनां ग्रहणे तु अविद्ध-द्विषयेयं सृष्टिरिति व्यवस्थापयितुं प्रश्नोपनिषदेकवाक्यतया पूर्वोक्तप्रकारेण शक्यते। ऐन्द्रजालिकत्वं हि व्यवहारदशायामेव बाध्यत्वमद्वैतिनोऽपि स्वाप्नादिव्यतिरिक्तानां न स्वीकुर्वन्ति भगवत्सृष्टानाम्। स्वाप्निका अपि भगवत्सृष्टा इति तु नात्र लेशतोऽपि समालोचितमिति प्रकृत ऐन्द्रजालि-कत्वमतनिरासः श्रीभाष्यानुयायिनामनवसर एव॥

अन्धं तमः प्रविशन्ति इति विद्याऽविद्ययोः स्वतन्त्रयोर्निन्दापुरस्सरं समुच्चितयोरङ्गाङ्गिभावेनामृतप्राप्तिसाधनत्वमेवोपदिश्यते, विद्या चेयमुपास-नैव, न तदतिरिक्ता साक्षात्काररमात्ररूपेति मतद्वयसम्मतमिदम्॥

इदमेवात्रालोचनीयम्—किम्—यत तेन त्यक्तेन इति कुर्वन्नेवेह

इति च प्रशान्तयोरत्र ग्रहणम्, ततान्ययोरिति। तत्र श्रीभाष्यानुयायिमते —मन्त्रद्वयेनापि कर्मयोगमात्रमुच्यते, नतु योगद्वयं स्वतन्त्रमिति मन्यते। तत्र च विद्याकृतयेत्यध्याहारात् वस्तुगत्योभयोरपि समुच्चितयोरेव न तत्रापि ग्रहणमिति तदेवेक्तव्यम्। सति चैवम्—कुर्वन्नेवेति मन्त्रार्थ एवा-त्राप्यनूद्यत इति फलति। तत्र च केवलकर्मयोगस्यापि निन्दाया तात्पर्ये असुर्या नाम ते लोका इति मन्त्रेणापि ज्ञानविधुरकर्मिणो निन्दयैव निर्णीते किं पुनरपूर्वत्वम्—अन्धं तम इत्यादिभिस्त्रिभिर्मन्त्रैः प्रतिपाद्यते। कर्मरहितज्ञानयोगनिन्दार्थं यदि ते विवक्ष्यन्ते, तर्हि श्रीभाष्यमते ज्ञान-कर्मणोरङ्गाङ्गिभावस्य विवक्षणात् कर्मयोगं विहाय ज्ञानयोगस्यानुष्ठान-मप्रसक्तमेवेति विशदमेव। अङ्गाङ्गिनो· रामुच्चयः खल्वत्र मन्त्रेषु विवक्ष्यते। अद्वैतमते तूपासनाकर्मणोर्नाङ्गाङ्गिभावः, नवाऽन्यतरानुष्ठान मात्रेणानन्दप्राप्तिः। अतोऽनानन्देतरलोकप्राप्तिमुद्दिश्योभयोः समुच्चितयो-र्विधानं मन्यते—केवलकर्मफलम्, केवलोपासनाफले चानन्दलोक एव। इतरस्याप्येवमसंश्लेष इति न्यायात् केवलकर्मयोगस्तु—विविदिषाङ्गतयो-पकरोति, केवलोपासना तु तत्फलमात्रस्योपकरोति। उभयोरनुष्ठानतः क्रममुक्तिर्भवति, यत्र भोगमात्रसाम्यम्, आनन्दात्मकलोकप्राप्तिरिति तु निष्कर्षः फलति। सर्वथा तु—विद्याशब्देनात्र न मुख्या ब्रह्मविद्या विवक्ष्यते, किन्तु प्रजापत्युपासनादिरेव ॥

अत एव—शाश्वतीभ्यः समाभ्य इति संवत्सरात्मकप्रजापतिपर्य-न्तत्वं लोकानां निरूप्यानन्तरमेवेमे मन्त्रा· प्रयुक्ताः प्रजापतिलोकपर्यन्त मनानन्दा नाम तु लोका इति तु हृदयम्। अमुमेवार्थं—तद्ये ह वै तत्प्रजापति-व्रतं चरन्ति ते मिथुनमुत्पादयन्ते। तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्म-चर्यं येषु सत्यं प्रतिष्ठितम्। तेषामेष विरजो ब्रह्मलोक· न येषु जिह्ममनृतं न माया चे"ति प्रश्नोपनिषदपि "प्रतिपादयति। विशदं चैतत् तन्मन्त्र-व्याख्यानावसरे भगवत्पादैरपि प्रथमप्रश्नान्ते निरूपितम्—विरजो ब्रह्मलोक इत्येषा ज्ञानयुक्तकर्मवतां गतिः, पूर्वोक्तस्तु ब्रह्मलोकः केवलकर्मिणां

चन्द्रलोकलक्षण इति। अत्र केवलकर्मिपदम् केवलोपासकस्याप्युपलक्षणमिति तु भाष्यहृदयम् ॥

अयमत्र निष्कर्षः—ब्रह्मलोको द्विविधोऽनानन्दलोकश्चन्द्रलोकः पुनरावृत्तियोग्यः, आनन्दलोकाख्यश्चापुनरावृत्तियोग्यः। व्यक्तं चैतत् प्रश्नोपनिषदि प्रथमप्रश्ने नवमदशम-मन्त्रयोः। श्रीभाष्यानुयायिनोऽपि ब्रह्मलोकमत्र विवक्षितमनात्मकामिनामात्मकामिनां चेति मन्यन्त एव। इयान् विशेषः—यद् द्वितीयो ब्रह्मैव लोकः परमात्मस्वरूपमिति तन्मतम्, अद्वैतिनां तु हिरण्यगर्भलोक एव सः यत्र भोगमात्रसाम्यमपुनरावृत्तिश्चेति। मुख्यब्रह्मप्राप्तावपि भोगमात्रसाम्यमेव ते मन्यन्ते, अद्वैतिनस्तु कृत्स्नभावापत्तिमिति तु विशेषः। तत्राद्वैत्यभिमतं ब्रह्मस्वरूपं मुक्तात्मस्वरूपं च तदेकतापन्नम्—तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्युक्तमित्यपि सूचितम् ॥

( क्रमशः )

## शान्ताया जनकः कः ?

[ निबन्धकः—वि॰ कृष्णस्वाम्य्यङ्गार्यः ]

श्रीमद्वाल्मीकिरामायणे बालकाण्डे नवमे सर्गे सुतार्थं तप्यमानस्य वसिष्ठादीनां महानुभावानामभ्यनुज्ञया हयमेधमाजिहीर्षोर्दशरथस्य श्रेयोलाभमपेक्षमाणः सुमंत्रो नाम पटुर्मतिरमात्यः पुरा कदाचित्कथाप्रसङ्गे भूतभविष्यदभिज्ञेन सनत्कुमारेण वर्णितः कोऽपि वृत्तान्तरसमीहितपूर्तिसाधक इत्युपादिश्यत। सुमंत्रमुखाद्विभण्डकसुतस्य ऋश्यशृङ्गस्य विस्मयापादकं महिमानमाकर्ण्य मनोरथसिद्धावुपजातप्रत्ययो दशरथस्समग्रां कथां जिज्ञासुस्सुमंत्रमप्राक्षीत्। स च राज्ञाऽनुमोदितमात्माभिप्रायमवेक्ष्य मुदितचेताः स्वामिभक्तो मंत्री यथाश्रुतं निरवशेषां कथामश्रावयद्दशमे सर्गे। रोमपादो नामाङ्गदेशाधीश्वरः केनापि धर्मव्यतिक्रमेण बहुकालव्यापिन्यामनावृष्ट्यावापतितायां प्रजानामपरिमितं दुःखानुभवमवलोक्य जातपरितापो दुर्भिक्ष-

निवारणस्योपायान्विज्ञातुं ब्राह्मणानाकारयामास। तत्त्वदर्शिभिस्तैर्भूसुरवर्यै-'र्विभण्डकसुतस्यानयनमेव दुर्भिक्षस्यापादनाय प्रभवतीत्यावेदितश्च कार्य-मेतद्दुष्करं निर्वर्तयितुममात्यानादिदेश। स्त्रीजातेरनभिज्ञस्य कठोरं ब्रह्मचर्य-व्रतमनुतिष्ठतस्तस्य महात्मनो धर्मवीर्याच्छङ्कमानैरुपसर्पणासमर्थैर्मन्त्रिणो दृष्ट्वा शापभयभ्रान्तो बलात्कारमनुपयुक्तं मन्यमानश्च राजा पुनरालोच्य कार्यस्य गुणदोषौ वारवनिताभिस्तमानाययितुमाज्ञापयामास। राजनिदेशा-नुवर्तिन्यश्च ता रूपजीवा नानाविधानि वेषभूषणानि धारयमाणास्तापसा-वासं काननमागत्य कस्मिंश्चिद्रमणीय उद्देशे महर्षिपुत्रमृष्यशृङ्गमद्राक्षुः। विकारवार्तानभिज्ञेन प्रसन्नेन परमात्मगुणध्यानपरेण चेतसा स ऋषि-कुमारो दूरादागतस्यातिथिजनस्य सत्कारमावश्यकं धर्मं जानानः स्वादु फलमूलादिकमाभ्य उपजहार। एताश्च परम्: कृतसङ्केता नागरकाणा-मातपरिचिता कपटवृत्तिमवलम्ब्य नामसाहाररूपतया बुद्धिभेदजनकान-पूपांस्तस्मै प्रदाय, इमान्यशेषाणि देशान्तरफलितानि मधुररस-स्यन्दीनि फलानि परिग्रहमर्हन्तीति प्रतारयामासुः। अन्ते चास्माकमाश्रमपदमेक-वारमागत्य भवानवलोकतामिति प्रार्थनामूरीकृतवता तेन साकमङ्गदेशसीमनि पदं न्यधिषत। ऋष्यशृङ्गस्य कठिनतपश्चर्याप्रभावेन सपदि महती वृष्टिरजा-यत, यथा दुर्भिक्षग्रस्ताः प्रजा विस्मृतपूर्वव्यथाः परमानन्दभरिताः प्रासीदन्। विदितवृत्तान्तश्च मुनिकुमारं प्रसादयितुकामो रोमपादः स्वपुत्रीं शान्तामस्मै प्रदातुमीहामास। निर्व्याजकृपानिधिस्सोऽपि राजकुमार्याः पाणिग्रहणमन्वमंस्त।"

इत्येषा सनत्कुमारेणाऽऽख्याता कथा। सुमन्त्रस्य वचनं यथार्थमनुमन्यमानो दशरथस्सान्तःपुरस्सहामात्यश्च महता वैभवेन रोमपादस्य राजधानीं प्रतस्थे। प्रियवयस्यस्य कोसलपतेरभ्यर्थना सार्थकयितुमुद्यतेन रोमपादेन शान्ता-जानिर्गमनायाऽनुज्ञातः साकेतमाजगाम। ऋत्विजा ऋष्यशृङ्गेण साकं प्रमोदनिर्भरान्तरङ्गो दशरथः कोसलराजधानीमयोध्यां प्राविक्षदिति कथा बालकाण्डस्यैकादशे सर्गे वर्णिता। "ऋष्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यती" ( बा० स० ६, श्लो० १८ ) तत्र सुमन्त्रवचने सम्बोधनविषयस्य

दशरथस्य जामातेत्येव प्रत्यासत्तिबलादर्थं कल्पनीये, उत्तरत्र "शान्ता तव सुता राजन् सह भर्त्रा विशाम्पते। मदीयं नगरं यातु कार्यं हि महदुद्यतम्"-(११-२०) मित्यत्र दशरथवाक्ये शान्ता रोमपादस्य राज्ञः कुमारीति स्पष्टतया प्रतिपादनात्तेन भ्रान्तिनिरोधाय रोमपादस्येत्यध्याहृत्य तस्य जामाता तव पुत्रान्विधास्यतीत्येव व्याख्यातव्यम्। एतदनुरोधेन च 'कन्या चास्य महाभागा शान्ता नाम भविष्यती' (११-३)त्यत्र सनत्कुमारवाक्येऽपीदंशब्देन रोमपादस्यैव परामर्शो न्याय्यः। एवञ्च रामायणानुसारेण शान्तायाः पिता रोमपाद इति सिध्यति। परन्तु दशरथो यदार्त्विज्याधिकारे तपस्विकुलभूषणमृश्यशृङ्गं निमंत्रयितुकामस्सख्युरङ्गाधिराजस्य समीपमुपागतोऽपि शान्ता तव सुतेति प्राधान्येन शान्तामेव निर्दिशति। शब्दगुणक्रियान्वयाभावरूपस्य शास्त्रीयस्यैवाप्राधान्यस्य सहयुक्तेऽप्रधान इति सूत्रयता पाणिनिना विवक्षणात्कार्यार्थित्वरूपं लौकिकं प्राधान्यमृश्यशृङ्गस्य निर्बाधमिति तु नोचितम्। समानस्थानापन्नयोर्द्वयोरन्यतरं प्रति त्वया तेन सहाऽऽगन्तव्यमित्यभिहिते तस्य स्वस्मिन्नप्राधान्यबुद्धिर्वक्तुरस्तीति कचिद्दुःखानुभवस्यापि दर्शनात् पिता पुत्रेण सहाऽऽगच्छतीत्यादौ पुत्रस्य प्राधान्यविवक्षणासम्भवाच्च सहयुक्तस्य लौकिकमप्राधान्यमेवेति सिद्धान्तात्। शान्ताया वक्ष्यमाणरीत्या दशरथ एव जनक इति स्वीकारे तु पुत्रीवात्सल्येन निमित्तेन तस्याः प्राधान्यनिर्देशस्सङ्गमयितुं शक्यः। तव सुतेति तु पोषणादि पितृकृत्यं त्वयैव निर्वर्तितमित्येवमुपचारार्थकतयाऽपि समर्थयितुं शक्यते। रोमपादस्य मित्रस्य गृहे शान्तायाः पालनपोषणादिकमभवदिति नेदं कदाऽप्यस्वाभाविकम्। अस्यापि पक्षस्य युक्तिभिरनुगृहीतस्योल्लेखो व्याख्याकारेण गोविन्दराजेन कृतः—'जामाता दशरथस्य रोमपादस्य वा। दशरथस्यौरसी शान्ता दत्ता रोमपादस्ये' त्याचक्षाणेन। न चात्र संप्रदानभूतस्यापि रोमपादस्य षष्ठ्यन्तशब्देनाभिधानात् स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपस्य दानस्याविवक्षणमेवाभिप्रेतमिति वाच्यम्। दत्तस्वीकारविधेः परिसमाप्तौ स्वस्वत्वनिवृत्तेर्न्यायप्राप्तत्वेन षष्ठ्यासंप्रदान-

रयापि विवक्षात, कारकाणि भवन्तीति न्यायमनुसृत्य शेषत्वरूपेण विव-क्षणादेव साधनीयत्वात् भूतपूर्वगत्याश्रयणेनैव च दशरथपुत्रीत्वव्यवहारोऽपि न विरुध्यते। एवमङ्गीकारे च शान्ता तव सुता राजन्नित्येतद्दशरथ-वचनमपि सम्यगुपपादितं भवति।

यद्यपि वाल्मीकिरामायणस्यैकस्य पर्यालोचनया शान्ता रोमपादस्यैवात्मजेति स्वीकारे विरोधिप्रमाणाभावान्न काचिदसङ्गतिः प्रतिभाति, तथापि हरिवंशे दशरथस्य पुत्रीति नामग्रहणपूर्वकं प्रतिपादनादुभयोरपीतिहासग्रन्थयोरैककण्ठ्यसम्पादनस्यावश्यकत्वादेतादृश्यामपि क्लिष्टकल्पनायामादरो दुर्निवारः। हरिवंशे एकत्रिंशे सर्गे,

अंगपुत्रो महानासीद्राजेन्द्रो दधिवाहनः।
दधिवाहनपुत्रस्तु राजा दधिरथोऽभवत॥
पुत्रो दधिरथस्यासीच्छक्रतुल्यपराक्रम।
विद्वान् धर्मरथो नाम तस्य चित्ररथस्सुतः।
तेन चित्ररथेनाथ तदा विष्णुपदे गिरौ।
यजता सहचक्रेण सोमः पीतो महात्मना।
अथ चित्ररथस्यापि पुत्रो दशरथोऽभवत्।
लो(रो)मपाद इति ख्यातः शान्ता यस्य सुताऽभवत्॥"

( क्रमशः )

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
Sanskrit Sahitya Parishad, 17, R G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

अथ विदितविशेषा देवविप्रादिभक्ताः
स्वमभिलषितमाप्तुं सत्यदेवं हि वव्रुः ॥१०१॥

धरणिपतिरमुष्मिन्नेव वारे प्रशस्ते
व्यरचयत सपर्यां सत्यदेवस्य सायम् ।
तदवधि नगरेऽस्मिन्नस्य पूजाप्रचाराद्
अभिमतफलकामी निष्फलो नैव कश्चित् ॥१०२॥

अशनशयनयानस्नानकृत्येषु तस्मिन्
समभवदतिमात्रा सत्यदेवस्य चर्चा ।
प्रतिगृहमपि पूजा प्राचरत्तस्य मास्या
जगति परिचिताभूत् सत्यदेवप्रतिष्ठा ॥१०३॥

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये
वणिग्बन्धनमोक्षो नामाष्टादशः सर्गः ।

---

एकोनविंशः सर्गः

नावं समारुह्य नृपोपनीतां
पूर्वां स्वकीयामथ वैश्यवर्यः ।
लघु स्वदेशाभिमुखं प्रतस्थे
चिरादनालोकितबन्धुवर्गः ॥१॥

पूर्वं पुराराधितसत्यदेव-
प्रसादपुष्पाणि निधाय शीर्षे ।
मुखेन तन्नाम मुहुर्गृहीत्वा
नौचालने नाविकमादिदेश ॥२॥

प्रभोर्निदेशं समवाप्य वश्या
नौवाहका रज्जुमथानुतीरं
बद्ध्वा तरण्या सह ते व्यकर्षन्
स्रोतोऽनुकूलश्च तरीं व्यनैषुः ॥३॥

तरीं प्रधानामनु पूर्वतुल्यं
निशान्तरम्यास्तटिनीं प्रपन्नाः ।
सानन्दकोलाहलपूर्णगर्भां
देशं ययुर्लक्षपतेरभीष्टम् ॥४॥

दुःखात्परं लक्षपतिः स वैश्यो
मुक्तिं समासाद्य तमोनिवासात् ।
सम्प्रस्थितः स्वालयमात्मबन्धून्
स्मरन् स्वभृत्यांस्त्वरयाश्चकार ॥५॥

राजप्रसादादखिलानि वस्तू-
न्युपागतस्तारणिकोपचारान् ।
क्लेशं न मार्गे समभुक्त कश्चित्
सर्वत्र सौकर्यमुपाललम्बे ॥६॥

वायुर्ववौ पृष्ठत एव मन्दः
स्रोतोऽनुकूलं वहति स्म नद्याम् ।
सत्यप्रसादात्तटिनी प्रशान्ता
तरीप्रयाणे न ततान बाधाम् ॥७॥

आदाय भाण्डानि बहूनि गर्भे
राजप्रदत्तानि मनोहराणि ।
यदृच्छया च क्रयसञ्चितानि
मार्गं तरण्यस्त्वरिता इवागुः ॥८॥

तरीमभिज्ञाय सरत्नगर्भां
रत्नानि हर्तुं तरणौ विलग्नम् ।
प्रसार्य बाहुं मृदु लज्जयेव
स्त्रीयोग्यशीला तटिनी निवृत्ता ॥९॥

नौवाहका वातपटीं नियुज्य
सरज्जुदण्डां गुणवृक्षकाग्रे ।

यानानुकूलानिलपूरिताङ्का
मामागनभुवुत्तरणो समोदाः ॥१०॥
विहङ्गमो याति यथान्तरीक्षे
विना प्रयासं धृतपक्षवातः ।
तथा तरी वातपटीसहाया
ततार तूर्णं तटिनीप्रवाहम् ॥११॥
नीरप्रवाहप्रतिकूलयाने
याने स्थिता वीक्ष्य वणिक्तरीं ताम् ।
द्रुतं स्वमार्गाभिमुखं चलन्तीं
स्वकीयभाग्यं सुतरां निनिन्दुः ॥१२॥
ये तत्र वैश्यानुगतास्तटान्ते
वैश्यस्य यात्रासमये समेताः
अन्ये च राज्ञः पुरुषाश्च रान्त-
स्ते दुःखदुःखेन गृहं प्रजग्मुः ॥१३॥
श्रीसत्यदेवस्य जयानुवादै-
स्तदा दिशस्ते मुखराः प्रचक्रुः ।
आकर्ण्य तं वीचितरङ्गनृत्यै-
स्तरङ्गिणी प्राप जडापि मोदम् ॥१४॥
क्रमादतिक्रम्य तरीचतुष्कं
तचन्द्रकेतोर्नगरं विशालम् ।
तरङ्गनृत्येन गृहीतनृत्यं
विवेश तूर्णं विजनं वनान्तम् ॥१५॥
घनायितश्यामलपादपानां
तीरे निरुद्धे घनसन्निवेशैः ।
भयावहश्वापदगर्जितानां
श्रुतिः समेषामदिशद् विशङ्काम् ॥१६॥

ततः परं शङ्कपतिस्तरीं स्वां
विहाय यातः श्वशुरस्य नौकाम् ।
भयेऽप्यनल्पे सति इक्सुखार्थं
तीरोपकण्ठं न जहुस्तरीस्थाः ॥१७॥

अथावदङ्कपतिः शुभीतं
सुतापतिं वत्स कथं बिभेषि ।
वनावली किं परिदृश्यमाना
त्वन्नेत्रयोर्नैव तनोति तृप्तिम् ॥१८॥

पश्यानुतीरं तरवः सपुष्पाः
सुस्निग्धदूर्वादलकीर्णमूलाः ।
समीपनीरप्रतिबिम्बिताङ्गाः
पश्यन्ति नूनं मुकुरे स्वमूर्त्तिम् ॥१९॥

तन्मूलतः स्कन्धमयो महीध्रो
ऊर्नि समासाद्य ततान शाखाः ।
ता एव तन्मूलमिहोग्रभानो-
र्वर्षाच्च रक्षन्ति कृतज्ञतायाः ॥२०॥

नदीपथं दूरतरं विहाय
पन्थानमेनं लघु गन्तुमाप्ताः ।
नवीनवस्तूनि च वीक्षमाणा-
स्तृप्तिं दृशोरप्यभिसंश्रयामः ॥२१॥

एषा नदी रम्यरसाभिषेकै-
रेतांस्तरून पोषयति प्रकामम् ।
मातेव वक्षोरससम्प्रदानात
सुतानतिस्नेहपरा समीची ॥२२॥

कोऽप्येष पुष्पं श्लथवृन्तमुक्तं
विकीर्य वातेन विकम्पिताङ्गः ।

सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः




संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# श्रीसंस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| February, 1943 | १८६४-शकीये माघे<br>२५श-वर्षस्य १०म-संख्या | Vol. XXV<br>No. 10 |

## उपनिषदामद्वैतपरता

( पूर्वानुवृत्तिः )

"अन्धं तमः प्रविशन्ती"ति पुनरपि त्रयो मन्त्राः सम्भूत्यसंभूतिविषया ये श्रूयन्ते ; ते तु ब्रह्मविद्याङ्गसमाधि-तदङ्गयोः समुच्चयं प्रतिपादयन्ति, इति श्रीभाष्यानुयायिनः । अद्वैतिनस्तु—व्याकृताव्याकृतोपासनयोः समुच्चयमिमे प्रतिपादयन्तीति । संभूतिः कार्यब्रह्म, असंभूतिः प्रकृतिर्मा वेति त्वद्वैतिनः, श्रीभाष्यानुयायिनस्तु—संभूतिर्नाम समाधिः, असंभूतिस्तु समाधिव्यतिरिक्ता समाध्यङ्गभूता निषिद्धनिवृत्तिरिति । अत्र मन्त्र-त्रिकद्वयेऽपि—अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्ययेति अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवादिति मन्त्रद्वयं मोक्षसाधनविद्याऽविद्याव्यतिरिक्तं वदतीति श्रीभाष्यानुयायिनः, अद्वैतिनस्तु—फलभेद एवोभयोरत्र विवक्ष्यत इति ।

तत्र प्रथममते—यदि विद्याऽविद्ययोरुभयोरपि न फलभेदः, तर्हि कथं न विकल्पोऽविशिष्टफलत्वादिति न्याय इत्यादि च पूर्वमेवालोचितम्। अङ्गाङ्गिनोरपि क्रमिकानुष्ठानस्यैव सिद्धत्वात्—कथं सहेति पदं सार्थकम् एवमङ्गाङ्गिनोरेककालानवरोधशङ्काया एवाप्रसंगात् किमर्थोऽत्र सहोक्तिरपीत्यादि बहु तत्र तत्र विस्तृतमेव॥

षोडशो मन्त्रस्तु विमर्शनिकर्षस्थानमेव मतद्वयावलम्बिनामपि। यतोऽत्रादित्यान्तर्वर्तिनं पुरुषं सोऽहमस्मीति विदुषामात्मत्वेन निरूपयति—सोऽहमस्मीति। अनेन च—समश्चायं पुरुषो यश्चासावादित्ये। स एक इति तैत्तिरीयोपनिषदप्युपस्थाप्यते। तेन च सामानाधिकरण्यमत्र "एकत्वमनुपश्यत" इति प्रक्रान्तमुक्तंतैत्तिरीयोपनिषद्विशदीकृतं चैक्ये सामानाधिकरण्यमेव, न तु शरीरशरीरिभाननिबन्धनमिति विशदीभवति। असावादित्यो ब्रह्म ब्रह्मैवाहमस्मीति श्रुत्यर्थ एवात्र प्रत्यभिज्ञायत इति तु निष्कर्षः॥

अत्रासौ पुरुष इति रविमण्डलाख्यशरीरादपि विविक्तं तदात्मस्वरूपं विवक्ष्यते रवेरप्यन्तर्यामीति मतद्वयसंप्रतिपन्नम्। अहमस्मीत्यत्रापि स्थूलसूक्ष्मकारणशरीराद्विविक्तं प्रत्यगात्मरूपमेवान्तर्यामितया विवक्ष्यत इति त्वद्वैतिनः, तेन च जीवब्रह्मणोरैक्यमन्तर्यामिस्वरूपेणैव लक्ष्यार्थेन, न त्वन्तर्यामिजीवयोरिति फलति। श्रीभाष्यादिमते तु—आदित्यान्तर्यामिण एव जीवान्तर्यामित्वस्यान्तर्यामिब्राह्मणवाक्येन पृथग्वचनेनैवोपपादितत्वात् जीवस्य स्वान्तर्यामिणा शरीरशरीरिभावेऽस्यापि स्वान्तर्यामिणा शरीरशरीरिभावाभावात्—योऽसौ पुरुषः सोऽहमित्यादित्यान्तर्यामिणा साकं जीवस्य शरीरतामादाय सामानाधिकरण्यव्यवस्थापनमसङ्गतमेव स्यात्। वस्तुगत्याऽन्तर्यामिण एकत्वेऽपि तत्तच्छरीराणां भेदेन शरीरान्तरेण कार्यात्मकेन शरीरितादशायां शरीरान्तरेण तादात्म्यव्यपदेशायोगात्। 'मुक्तात्मदृष्ट्या नियामकैक्याभिप्रायोऽयं मन्त्र इति विवक्षायां तु स्वान्तर्यामिस्वरूपज्ञानं यमेवैष वृणुते तेन लभ्य इति मन्त्रोक्तेन तदीयेन मार्गेण परमात्मानुग्रहाधीनमिति पूषसविधे तत्प्रार्थनमनुपपन्नं स्यात्। अद्वैतमते तु—

उपाधिभेदेनैवात्मभेदात् स्वस्योपाधिविवेकेन ज्ञानेऽपि सगुणात् भेदज्ञाननिरासं विना न जीवब्रह्मैक्यानुभवसंभवः, इति सगुणस्याप्युपाधिविविक्तस्वाभेदयोग्यात्मस्वरूपप्रकाशप्रार्थनमत्यावश्यकमेव। तेन च सगुणाधिष्ठानमेव स्वस्याप्यधिष्ठानमिति जीवब्रह्माभेदानुसंधानं राद्धान्ततेतराम्। तथा च—तत्त्वमस्यादिवाक्येष्वपि सामानाधिकरण्यमैक्य एवेति सिद्धान्त एवेशावास्योपनिषदाऽपि प्रतिपाद्यते।

अत्रेदमालोचनीयम्—योऽसौ पुरुषः सोऽहमस्मीति किमुद्दिश्य किं विधीयते। यदि पुरुषमुद्दिश्य सोऽहमस्मीति जीवशरीरकत्वं विधीयते, तर्हि उद्देश्यवाचकास्मदुपपदत्वाभावात् अस्मीत्युत्तमपुरुषप्रयोगानुपपत्तिः। यत्तु वेदान्तदेशिकानाम्—त्वं राजासि अहं राजाऽस्मीत्यादाविव तादधीन्याद्युपचारविवक्षया "तत्त्वमसी"ति "सोऽहमस्मी"ति च मध्यमोत्तमपुरुषयोः सामञ्जस्यमिति वर्णनम्, तदिदं तदीयैरेव कूरनारायणैः—तदप्युपेक्षणीयमेव; लोकवेदयोरद्यतनपर्यन्तदृश्यमानप्रयोगादिव्यवहारबलेन जातिगुणशब्दवत् मुख्यवृत्त्यैव निर्वाहसंभवे उपचारकल्पनस्यान्याय्यत्वादित्यादिना निरस्तमेव। अद्वैतमते तु—मुख्यवृत्तितादर्थ्यैव सामानाधिकरण्यम्। यथा च मुख्यवृत्तावपि तत्त्वपदयोस्तात्पर्यानुसारेण शाब्दबोधे कार्यं स्वरूपचैतन्यमात्रस्यान्वयः न तु विशिष्टस्य, तच्च परिभाषा-लघुचन्द्रिकादौ विशदमेव। "तत्त्वमसी"त्यत्र न किमप्युद्दिश्यते, न वा किमपि विधीयत इति श्रीभाष्यसिद्धान्ते तु—तत्त्वमसीत्यादौ मध्यमादिपुरुषप्रयोगोऽनुपपन्नः॥

पुरुषपदेन त्वत्र मुक्तात्मैव, गीतायामिव—"प्रकृतिं पुरुषं चैवे"त्यादाविव विवक्ष्यत इति तु केचन श्रीभाष्यानुयायिनः, तन्मतदृष्ट्या तु मुक्तात्मनां सर्वेषामपि परमात्मशरीरतया परस्परं भेदस्यैव श्रीभाष्यमते स्वीकृतत्वात् आत्मना सामानाधिकरण्यव्यपदेशो विरुद्ध एव। पुरुषशब्देनात्र नारायण एव विवक्षितः पुरुषसूक्तैकवाक्यतयेति यदस्तु—"ईशावास्यमि"तीशपदेनोपक्रमात् शिवार्कमणिदीपिकोक्तरीत्या—पुरुषसूक्तस्यापि शिवोत्कर्ष एव तात्पर्याच्च नोपपद्यत इति शैवविशिष्टाद्वैतवादिनो मन्यन्ते। अद्वैतिनस्तु

सगुणे कारणे शिवविष्ण्वादिसर्वपदवाच्ये न निर्भरं मन्यते, कारणस्वरूपं तत्पदवाच्यार्थं एव पुरुषपदार्थं इति तु तेषां निष्कर्षः, सर्वथा तु—षोडशोऽपि मन्त्रः सम्यग् विमृश्यमानः सामानाधिकरण्यादिघटितश्चाद्वैतवादमेव पोषयति ॥

सप्तदशो मन्त्रो—वायुरनिलमिति ब्रह्मविदां प्राणस्याधिदैवते वायौ लयप्रतिपादनमिति नोत्क्रमणापेक्षा मुक्तिरिति चाद्वैतिनां विवरणं तु श्रीभाष्यानुयायिनां हृदयशूलं स्यादिति भगवत एव वाय्वनिलशब्दवाच्य-स्यानेनामृतत्वम्, अन्येषां मृत्युश्च प्रतिपाद्यतेऽनेन मन्त्रेणेति ते मन्यन्ते। परमात्मनित्यत्वं हीदं "स पर्यगादि"तिमन्त्रेऽव्रणपदेनैवावगतमिति वितथमत्र तन्निरूपणं पुनरपि ॥

एतेन—इतरनश्वरत्वमपि—व्याख्यातम्, "इदं शरीरं भस्मान्तमि"ति कार्यमात्रं यदि विवक्ष्यते, कार्यनित्यताया अप्रसक्तत्वात् कार्यत्वेनैव तदनित्य-त्वस्याप्यवगतत्वात् तन्निरूपणमप्यत्र निष्प्रयोजनमेव। 'ओक्रतो स्मरे'त्यादिमन्त्रोऽपि कर्मणामपि विद्योत्पत्तावुपयोग इति सर्वापेक्षासूत्रतद्विषय-वाक्यसिद्धमनुवदतीत्यद्वैतिनां विवरणमेव शोभतेतराम्, नतु क्रत्वादिरूपेण भगवदनुसन्धानमात्रम्। तेन रूपेणानुसन्धानस्य मुख्यप्रयोजनं तु नात्र किमपि दृश्यत इति त्वद्वैतिनः। तदेवं श्रीभाष्यदृष्ट्याऽद्वैतभाष्यदृष्ट्या चेशावास्योपनिषद् यथाशक्ति समालोचिता। इतःपरं श्रीमदानन्दतीर्थमत-दृष्ट्योक्तामुपनिषदं समालोचयामः—

तद्यथा—ईशस्यावासयोग्यं स्वतः प्रवृत्त्यशक्तत्वाद् ईशाधीनम्, जगत्यां प्रकृतौ विद्यमानम् जगत्। प्रकृतिगत्वं हि जगत ईशावास्यत्वं विना नोप-पद्यते। ततश्च तेनेश्वरेण त्यक्तेन प्रदत्तेन भोगः कर्तव्यः, नतु कस्यापि सविधेऽर्थस्य प्रार्थना कर्तव्येति प्रथममन्त्रार्थः। तेन च परमात्मनो नोपादानत्वम्, येन व्याप्तत्वं जगत इति स्यात्, नवा त्यागयोग्यताऽर्थस्य, येन संन्यासविधौ मन्त्रस्यास्य तात्पर्यं स्यादिति प्रतीयते। तथाचाद्वैतिना

( क्रमशः )

# शान्तायाः जनकः कः ?

( पूर्वानुवृत्तः )

[ निबन्धक — वि· कृष्णस्वाम्ययज्वार्यः ]

इत्यमीभिः पद्यैः शान्ताया जनको रोमपादनाम्ना प्रसिद्धो दशरथ एवेति स्पष्टतया प्रतिपादनात् । एवं च दशरथो न तावदिक्ष्वाकुवंशीय इति नायं रामादीनां चतुर्णां वीरकुमाराणां जनकादभिन्नः । अङ्गवंशोद्भवश्चासौ दशरथस्य कोसलाधिपतेरिक्ष्वाकुकुलालङ्कारस्य प्रियवयस्यस्समाननामा कारणान्तरेण च रोमपाद इति लोकेषु प्रख्यातिमाससादेति न कश्चिद्-नयोर्मिथयोर्विरोधः । एवं स्थिते गोविन्दराजस्य सन्देहमूलभूतं प्रमाणानुपन्यासाद्विचारानर्हं वचनमवलम्ब्य हरिवंशविरोधमापादयन्तः परास्तप्राया एव । हरिवंशेन शान्तापितू रोमपादस्यैव दशरथ इति नामान्तरमप्यासीदित्येतावन्मात्रस्यैवाभिप्रायस्योपवर्णनात् । शान्ता तव सुता राजन्नित्यत्र शान्तायाः प्राधान्यं प्रियसखस्य रोमपादस्य तनूजाया पुत्रीनिर्विशेषस्य वात्सल्यस्य प्रदर्शनार्थेनापि व्याख्यातुं शक्यम् । एवञ्च रामायणे हरिवंशे च शान्ताया ऐक्ष्वाकदशरथपुत्रीत्वं नैवोक्तमिति पौराणिका असत्यभाषणदोषात्प्रच्याविताः । विरुद्धव्याहारयोरन्यतरस्यान्यथाऽनृतत्वमेवेति पुराणानामप्रामाण्यं विपाधयिषतामुपकारसम्भवात् ।

यदपि केनचिद् व्याख्यात्रा "सान्तःपुरस्सहामात्यः प्रययौ यत्र स द्विजः" ( ११-१३ ) इत्यत्र शान्तायाः पुत्र्या दर्शनार्थमन्तःपुरागमन'मिति तत्प्रयोजनमुपपादितं, तदप्यापाततः । उक्तरीत्या शान्ता रोमपादपुत्रीत्येव सिद्धेः । शान्ताभर्तुस्सहभार्यस्य साकेतागमने भविष्यति शान्तादर्शनाय दूरदेशप्रयाणे कारणाभावाच्च । तस्माद्दशरथस्तरुणीं भार्यां सुन्दरीं कैकेयीं कामयमानस्तद्वियोगदुःखस्यातीवदुर्विषहतया, राजपत्नीनामसूर्यम्पश्यानामपि

देशान्तरसञ्चारेऽपेक्षासम्भवात्तासामिष्टार्थसम्पत्त्यै वा शान्तःपुर एव प्रस्थान-मरोचयदिति युक्तं तात्पर्यकल्पनम्।

नन्वेवमपि "पुत्रस्त्वङ्गस्य राज्ञस्तु रोमपाद इति श्रुतः" इति (११-४) रामायणवाक्याद्रोमपादस्साक्षादङ्गराजपुत्र इति, उदाहृत-हरिवंशग्रन्थात्तु चित्ररथनाम्नो नृपतेरपत्यमिति च प्रतीतेर्विरोधो दुष्परिहर एवेति चेत्, सत्यम्। एतादृशविरोधप्रसङ्गे पुराणप्रामाण्यवादिभिराद्रियमाणं 'प्रति-कल्पमितिहासस्याऽऽवृत्तिर्भवति; तत्र कचिदंशे विपर्यासरास्भावना न दोषायेत्युभयग्रन्थसङ्गतिः। अन्यथा महाभारते लक्ष्मणेन हतस्य कुम्भकर्णस्य रामायणे श्रीरामेण वधासम्भवा'दिति समाधानमाधुनिकविमर्शकानां न तृप्तिकरम्। न चाङ्गस्य अङ्गदेशस्य राज्ञश्चित्ररथस्येत्येव व्याख्याया विरोधस्संघटयितव्यः, अंगराजस्येति गोविन्दराजोक्तिरपि चित्ररथाभि-प्रायेणैव प्रवृत्तेति न तस्या अप्रामाण्यापत्तिरिति वाच्यम्। व्यक्तिविशेष-मनिर्दिश्य सामान्यरूपेण वंशानुकीर्तनस्य कुत्राऽप्यदर्शनात्। अङ्गानामीश्वर इत्येतावतैव राजवंशप्रसूतिरप्यनुमातुं शक्यत इत्येतस्य वाक्यस्य नैरर्थक्य-प्रसङ्गाच्च। देशवाचकानामङ्गादिशब्दानां जनपदार्थपदार्थक-तद्धितप्रत्ययस्य लुपि युक्तवद्भावेन नित्यबहुवचनत्वादङ्गस्येति प्रयोगस्यासाधुत्वापत्तेश्च।

उत्तररामचरिते प्रस्तावनायां नटो नाम सूत्रधारानुचरः कश्चन 'वशिष्ठाधिष्ठिता देव्यो गता रामस्य मातरः। अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रम' मित्यभिदधानः, ऐक्ष्वाकदशरथस्य कौसन्तानाभावात्को वा जामातेति संशयितचेतसि सूत्रधारे 'वैदेशिकोऽस्मीति पृच्छामः, कः पुनर्जामाते'त्यनुयुञ्जाने, "कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्। अपत्यकृतिका राज्ञे रोमपादाय तां ददौ॥ विभण्डकसुतस्तामृष्यशृङ्ग उपयेमे। तेन द्वादशवर्षं सत्रमारब्ध"मिति काञ्चित्कथामाचष्टे। भवभूति-महाकविर्यदि प्रमाणभूतं पुराणान्तरमनाश्रित्य रामायणमेवोपाजीविष्यत्, तर्हि नैतादृशीं वाल्मीकिनाऽदृष्टां कथां नाटकारम्भ उदाहरिष्यत्। हरि-वंशेऽपि दशरथस्य रोमपादाख्यस्याङ्गवंशीयत्वाभिधानात्कथेयमुपजीव्यान्तर-

रपत्तावपि पुत्राभावे व्यसनं स्वाभाविकमिति समर्थनमिष्येत च, तथापि रामायणे प्रकरणान्तरे कुत्रापि शान्तावृत्तान्तानुल्लेखात् स्पष्टतया दशरथस्य पुत्रीत्यप्यनभिधानात् सनत्कुमारवाक्ये दशरथवाक्ये चाङ्गाधिराजस्य पुत्रीत्येव प्रतिपादनेन जनकत्वसम्बन्धस्य हरिवंशानुरोधेन रोमपाद एव सम्भवाच्च। गोविन्दराजस्य प्रमाणाप्रदर्शनेन स्वोक्तार्थे स्वयमविश्वसतो विपरीतव्याख्यानं कदाचिदुत्तररामचरितस्यावलोकनादर्थान्तरवर्णनमावश्यकमुत्प्रेक्षमाणस्य न संमाननामर्हति। रामवर्मदर्शितरीत्या तु शान्ताया नप्तृकदुहितृत्वेन दशरथगृहे प्राधान्यमपि सङ्गच्छत इति युक्तमुत्पश्यामः। एवञ्च सख्यं सम्बन्धकञ्चैवे' (११-१८) त्यत्र रोमपाददशरथयोः शान्ताद्वारक एव सम्बन्धः प्रतीयत इत्यपि न्याय्यमेव। तस्मात्प्रमाणानुपलम्भेऽपि विरोधिपक्षे दूषणाविष्काराद् रामवर्मण उक्तिर्ज्यायसीति नात्र विवादस्यावसरः। भवभूतिस्तु हरिवंशविरोधपरिहाराय काल्पनिकीं कथामवलम्ब इत्युपपन्नमेव, नाटकेऽनेन कथाभेदेन कस्यापि विशिष्टप्रयोजनस्यानिष्पत्त्या रसपरिपोषाय कथां विपर्यास्थदिति वक्तुमशक्यत्वात्। अत एव चम्पूरामायणे 'सम्बन्धिनं मुनिमानीये'त्यत्र संबंधं सख्यलक्षणं व्याचक्षाणा उपेक्षणीयाः। हरिवंशरामायणयोरङ्गदेशीयराजवंशानुक्रमे परं विरोधो दुर्निवार एवेति शम्॥

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३।
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*
**Dinabandhu Sahityashastri**
Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta

तीरोपकण्ठे सलिले कृतक्षो
नदीं स्वधात्रीमिव पर्युपास्ते ॥२३॥
कश्चिद् विहङ्गध्वनिभिर्मनोज्ञैः
संशब्दितानां महतां तरूणाम् ।
समन्ततो गाढतरप्रतानैः
प्रतीयते कोऽपि सजीवभावः ॥२४॥
शुकोच्चयाः किंशुकपादपेषु
फुल्लप्रसूनेषु दलैकवर्णाः ।
स्वजातियोग्यं स्वमादधाना-
स्तनैव विश्लेषपदं श्रयन्ते ॥२५॥
ततपादपानां शुकतुल्यतायाः
शुकाः किमित्येव हि संशयः स्यात् ।
अतोऽत्र किं किंशुक इत्यभिख्या
योगेन धात्रा विहिताऽधिलोकम् ॥२६॥
विशाल-तालीवनशीर्षलग्नाः
कठोरशब्दाः कुरराभिधानाः ।
सर्वं दिगन्तं प्रतियाममेव
शब्दापयन्ते पुररक्षितुल्याः ॥२७॥
तमालवृक्षः शिखिशोभिताग्रो
वातध्वनद्वेणुगताग्रशाखः ।
वृन्दावने सूरसुतातटान्ते
वंशीकरः कृष्ण इवावभाति ॥२८॥
यावत् समीरः स्वबलादधस्ताद्
वंशाग्रभागान् नमयत्यमुष्मिन् ।
तावन्न शक्तः स्वनतिं विषोढुं
समुत्कटं क्रोशति वंशकुञ्जः ॥२९॥

विहङ्गमारोपितबीजयोगात्
क्षितिप्ररूढाः फलपुष्पवृक्षाः ।
वितीर्य तेभ्यः फलपुष्पजालं
कृतज्ञतामात्मगतां वदन्ति ॥३०॥

प्रतिप्रसूनं भ्रमरा भ्रमन्तः
सन्तोषतः पुष्परसं पिबन्तः ।
मत्ता इवास्पष्टरसं सृजन्तो
दिग्भ्रान्तवत् सर्वदिशः श्रयन्ते ॥३१॥

अमी समाहृत्य तृणानि यत्ना-
न्निर्माय नीलानि परःशतानि ।
विहङ्गमा वृक्षदलान्तराले
वसन्ति वर्षातपदुःखमुक्ताः ॥३२॥

समुल्लसत्तूलफलप्रताना
वृद्धा इवैते पलितोत्तमाङ्गाः ।
समुन्नताः शाल्मलयः स्वपुष्पै
रक्तैर्विचित्रां श्रियमुद्वहन्ते ॥३३॥

अत्यल्पमात्रेऽपि वयस्यतीते
वृक्षान्तराग्रेषु मरुत्प्रभावात् ।
सन्दृश्यमानं पलितं न शक्तं
वृद्धत्वसाध्यानुमितौ सदोषम् ॥३४॥

पुष्पेषु रागो बत वार्द्धकेऽपि
तत्पादपे शाल्मलिनामधेये ।
वयोऽनुसारेण विवर्ति शीलम्
इति व्यवस्थां शिथिलीकरोति ॥३५॥

समीपजातेषु बहुद्रुमेषु
तत्तूलयोगात् पलितं गतेषु ।

संसर्गजा दोषगुणा भवन्ती-
        त्येतद्वचः सार्थकतां वृणोते ॥३६॥
जलोपकण्ठस्थितपादपेषु
        शीर्षे स्थितैः श्वेतबकैरसंख्यैः ।
विशेषबुद्धिः सुतरां विलुप्ता
        दूरादनाशङ्कितविग्रहेषु ॥३७॥
श्रेणीप्रबन्धेन नभोगतानां
        विहङ्गमानां बकसारसानाम् ।
मालेव चित्रा प्रकृतेरसृष्टा
        शून्ये पराणीव कृतां तनोति ॥३८॥
अदूरतो गाढवनान्तराला-
        च्छार्दूलराजः ध्वनिमेति भीमः ।
सुदुर्बलानां परितः पशूनाम्
        आक्रोशतामातिग्मतरश्च ॥३९॥
कश्चिन्मृगं व्याघ्रवरः पिपासुं
        नीरोपकण्ठे पुलिने निषण्णं
वेगात् समुत्पत्य समीपकुञ्जात्
        पृष्ठेन भृत्वा सहसा प्रतस्थे ॥४०॥
अतीत्य बह्वीं वनभूमिमेते
        समागता दूरतमं प्रदेशम् ।
पश्चान्निरीक्ष्य घनप्रचारान्
        महीभृतः श्रोणिगतानतीतान् ॥४१॥
एते धरण्या वरणोपमानाः
        प्रसूनकाशैरिव रत्नवृन्दैः ।
एषा नदी तत्परिखेव रम्या
        विभाति हिंस्रैर्बहुभिः प्रकीर्णा ॥४२॥

सवल्लिवृक्षा तटभूमिरेषा
क्रमेण पश्चाद् विशतीव वेगात्।
गतिर्जलस्याप्यनुकूलभावा
तरीप्रयाणावगतिं निरुन्धे ॥४३॥

क्षणे क्षणे घोररवा वराहा
धावन्त्यमी दूरमतीव वेगात्।
ऋक्षाश्च भीमाकृतय. सरोषा
भयानकैरेव रवैश्चरन्ति ॥४४॥

सुधूम्रवर्णा महिषाः कुतश्चिन्
मदान्विता भीषणदीर्घशृङ्गाः।
विदारयन्ते धरणिं तटान्ते
समेत्य रोषादतिरक्तनेत्राः ॥४५॥

शाखामृगा. केचन दग्धवक्त्रा
लाङ्गूलवन्तः प्रतिवृक्षशीर्षम्।
समुत्पतन्तः फलमाहरन्तो
विदग्धतां स्वां प्रतिपादयन्ते ॥४६॥

क्षुद्राः प्लवङ्गाः सभया महद्भ्यो
दूरेण वृक्षोपरि सञ्चरन्ति।
समैः समं सम्पतितैरभिन्ने
लक्ष्ये सरावं कलहं श्रयन्ते ॥४७॥

केचित् पुनः कौतुकिनः प्रकामं
वृक्षाग्रभागात् सलिले पतित्वा।
मुहुर्मुहुस्तीरतरूञ् श्रयन्तः
स्वकौतुकं सार्थकतां नयन्ति ॥४८॥

नीरान्तिकस्थेषु महीरुहेषु
पादैः समाकृष्टरसेष्वमीषु।

सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः




संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# श्रीसंस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| March, 1943 | १८६४-शकीये फाल्गुने<br>२५श-वर्षस्य ११श-संख्या | Vol. XXV<br>No. 11 |
|---|---|---|

## उपनिषदामद्वैतपरता

( पूर्वानुवृत्तिः )

विशिष्टाद्वैतिनां वा विवरणमभिन्ननिमित्तोपादानताभिप्रायनिबन्धनं न युक्तम् ब्रह्मणः केवलनिमित्तकारणताया एव स्वीकारस्योचितत्वादिति श्रीमदानन्द-तीर्थाचार्याशय इति फलति । अत्र इदं सर्वं प्रकृतिगमीशावास्यमित्यतोऽधिकं किमपि—“तेन त्यक्तेन भुञ्जीथा” इत्यादिना न प्रतिपाद्यते। तदधीन-स्वरूपत्वस्योक्त्यैव सर्वेषु लाभात् । इदं सर्वं जगत् प्रकृतिगमिति प्रकृति-गत्योल्लेखस्तु—यदि जगत्कोटौ प्रकृतेरप्रवेशं मत्वा, तर्हि प्रकृतेरीशा-धीनत्वमत्रानुक्तं भवति, यदि तु प्रवेशं मत्वा, तर्हि जगत्यां जगदिति वितथम्, अद्वैतमते तु सर्वं प्रकृतमेव ब्रह्मव्यतिरिक्तं ब्रह्मव्यतिरेकेणाभावात् मिथ्याभूतमिति सूचनेन हिरण्यगर्भलोकान्तस्य वैराग्ययोग्यतासूचनार्थतया

सर्वमुपपद्यते। "तेन त्यक्तेने"त्यत्र तेन-पदेन पूर्ववाक्यप्रधानतया प्रस्तुतं जगत्परित्यज्याप्रधानस्येशस्य परामर्श., तेन त्यक्तेनेत्यनयोर्वैयधिकरण्येनान्वयश्चापि दोषो दुरपह्नव एव स्यात्। "मया ततमिदं सर्वं जगदव्यक्तमूर्तिने"ति भगवद्गीतावाक्येनैकवाक्यताभावोऽप्यत्र मते समापतति।

"स्वतः प्रवृत्त्यशक्तत्वादीशावास्यमिदं जगत्।" इति ब्रह्माण्डपुराणवचनं तु घटादीनां प्रवृत्तिपर्यन्तव्यवहारगोचरत्वमपि सविकल्पकज्ञानविषयाणामधिष्ठानविधया ब्रह्मणोऽनुगमे प्रमाणमित्येवमेवाशयम्, अत एव—"प्रवृत्तये प्रकृतिर्गा यस्मात्" इति प्रकृत्यधीनतयैव जगतः प्रवृत्तिगोचरत्वं प्रतिपाद्यते। प्रकृत्यधीनतयैव प्रवृत्तिगोचरत्वमीशावास्यत्वे कुतो निमित्तमिति शङ्कावारणार्थं तु—"स प्रकृतीश्वर" इति वाक्यशेषः। तथा च प्राकृतानां मिथ्याभूतानामपि वा प्रवृत्तिगोचराणामधिष्ठानतया ब्रह्मानुवेधो योज्य एवेति फलति। "तदधीनप्रवृत्तित्वात्तदीयं सर्वमेव तत्" इति तु ईशावास्यमित्यनेनापुनरुक्तार्थम्, प्रकृतिगम्, प्रकृतिगोचर इति च प्रस्तुतप्रकृत्यधीनत्वात् प्राकृतत्वं मायिकत्वापरपर्यायमेव प्रतिपादयति। तद्दत्तेनैव भुञ्जीथाः इति तु "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुत्यर्थ एव परमं तात्पर्यं तेन त्यक्तेन भुञ्जीथा इत्यस्येति बोधयति। तेन च स्वरूपतो न पुरुषार्थकं जगतः, किन्तु नैराश्यमेव सर्वमर्हतीति विशदीभवति। तथा चाद्वैताभिमते विवरण एवोक्तब्रह्माण्डपुराणवचनानामपि श्रीमदानन्दतीर्थसंगृहीतानां तात्पर्यम्। "तृष्णाविच्छेदवत् स्वोचितकर्मानुष्ठानमप्यावश्यकं ज्ञानार्थिनामि"ति अत्र जयतीर्थविवरणम्, प्रथममन्त्रे वैराग्यरूपाधिकारप्रतिपादनानन्तरं द्वितीये मन्त्रे तत्त्वं प्रतिपाद्यत इति श्रीरघुनाथतीर्थटीका च "तेन त्यक्तेने"त्यस्याद्वैताभिमतं विवरणमेव हृदयेन समाद्रियते।

यत्तु श्रीभागवतेऽष्टमादौ—"आत्मावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्।" इति प्रकृतमन्त्रसमानक्रमः श्लोकः, तेनाप्यद्वैताभिमत एवार्थोऽवबोध्यते। अत एव —"धत्तेऽस्य जन्माद्यजयाऽऽत्मशक्त्या तां विद्ययोदस्य निरीह आस्ते" इति

अनाद्यविद्यानाशेन विद्याधीनेन निरीहतयाऽवस्थानमेव परमात्मनः स्वभाव इत्युत्तरत्र तत्रैव प्रतिपादितमुपपद्यते। अनेन हि ब्रह्मणोऽपि जगद्व्यापित्वं तत्कारणप्रकृतिद्वारकमेव, जगतश्च ब्रह्मविवर्त्ततया न प्रेमयोग्यतेत्यादिकमेव प्रतिपाद्यते। नहि सर्वजगत्कारणमात्मशक्तिरजा विनश्वरा च काचित् अद्वैतमतं विहायान्यत्र वर्त्तते।

यत्तु श्रीजयतीर्थटीकायाम्—अज्ञवत् ज्ञानिनोऽपि भगवत्पूजात्मक-स्वकर्मकरणे पापलेशसद्भावेन नात्र सर्वकर्मत्यागो विवक्षितः। ईशा-वास्यत्वस्य कर्माकरणाहेतुत्वात्। आच्छाद्याच्छादकयोरभेदस्याद्दष्टपूर्वत्वा-न्नात्राद्वैतज्ञानविवक्षेति वर्णितम्, तदिदमद्वैतभाष्यकारैर्जगन्मिथ्यात्ववाद एवास्य तात्पर्यम्, तथाच नित्यानित्यवस्तुविवेकादिद्वारा सर्वकर्मत्यागोप-योगित्वमित्येवाभिप्रेतत्वाद् नोपपद्यते। यथा चाद्वैतमतेऽपि—नाश्रमधर्म-त्यागोऽपि त्यागशब्दार्थः किन्तु यज्ञादिकर्मत्याग एव, तेन च कर्मविचार-पूर्ववृत्ततया नेहैव जन्मनि नियम इत्येव विवक्षितम्, तथाऽन्यत्र व्यक्तम्। तथाच—"कुर्वन्नेवेह कर्माणी"ति विषयान्तरपरम्, नतु ज्ञानिनामपि कर्मानु-ष्ठाननैयत्यनिरूपणपरम्। अत एव—"असुर्या नामे"ति तृतीयमन्त्रेण कर्म-निन्दोपपद्यते। यो जिजीविषेत्, स कुर्वन्नेवेह कर्माणि तिष्ठेदित्येव मतद्वयेऽप्यर्थः, इयान् विशेषः—यत्—कर्मात्र विधीयमानं ज्ञानिनोऽप्युद्दिश्य भगवत्पूजनात्मकमेव विवक्ष्यते, इति द्वैतमतम्, अद्वैतमतं तु कर्म-सामान्यमज्ञानेनाधिकृत्य विधीयत इति।

तथाच—आप्रायणं जीवन्मुक्तानामपि कर्मानुष्ठानं यद्यत्र विधित्सितं द्वैत-मतरीत्या, तर्हि जिजीविषेदिति निमित्तानुवादो वितथ एव स्यात्। अतोऽज्ञ-विषय एवायं मन्त्रः, नतु ज्ञानार्थिविषयकोऽपि। अत एव—प्रथमे मन्त्रे वैराग्यं प्रतिपादितं इति द्वैतसिद्धान्तोऽप्युपपद्यते। अन्यथा—भगवत्प्रीणनाख्य-कर्मणामविरक्तानधिकारिकत्वाद् वितथः प्रथमो मन्त्र आपद्येत द्वैतमते, अद्वैत-मते तु प्रथमेन संन्यासयोगः, द्वितीयेन कर्मयोगश्च प्रतिपाद्यत इति न तस्य वैयर्थ्यम्। "असुर्या नामे"ति मन्त्रस्तु—कर्मयोगमात्रमोक्षद्वारता-

वादिनो निरासार्थः, तस्य ज्ञानयोगेनासमुच्चयव्यवस्थापनार्थश्च। तथा चाद्वैतमते कर्मफलनिष्कर्षप्रतिपादनार्थस्तृतीयो मन्त्रः, द्वैतमते तु—अपरमात्मविनिन्दापर इति विशेषः फलति। अत्र च प्रथमद्वितीययोः परमात्मविद्याप्रकृतत्वात् अपरमात्मविन्निन्दा न परमात्मवित्स्तुत्यर्थतयाऽप्युपपद्यत इति मन्तव्यम्। "अतोऽमी ऋषयः कर्माणीहन्तेऽकर्महेतवे। ईषयान्ते हि पुरुषः प्रायोऽनीहां प्रपद्यते" इति श्रीमद्भागवताष्टमस्कन्धाद्यो श्लोकोऽपि "कुर्वन्नेवेह कर्माणीति मन्त्रस्येहमानाधिकारिविषयत्वमेव विशदयति, नतु ज्ञानार्थिने विरक्तं चेति द्वैतिनो प्रधानोपष्टम्भाष्टमस्कन्धादिरपि केवलाद्वैतवादमेवात्र समाद्रियन्ते। "अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः। ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम्" इति नारदीयवचने ज्ञानिनोऽपीति वाक्यशेषस्त्वर्थवाद एव। न हि ज्ञानातिरिक्तं कृष्णोपासनं नामापरमस्ति, येन ज्ञानिनः कृष्णोपासनराहित्यमभ्याहृतं स्यात्। कृष्णोपास्तिमकुर्वत इत्यत्र स्वकर्मणेत्यध्याहारेणोक्तश्लोकरयान्यथा नयनं तु क्लिष्टतरत्वान्न समादरमर्हति।

अनेजदेकमिति तुरीयो मन्त्रस्तत्त्वप्रतिपादनपर इति संप्रतिपन्नम्। तत्र द्वैतादिमते तदुपास्यं फलं तत्साधनं वा ब्रह्म बोध्यत इति मन्यते, अद्वैतमते तु ज्ञेयस्वरूपमात्रं प्रतिपाद्यत इति। तत्र ब्रह्मण एव प्रतिपाद्यत्वमिष्टत्वं चेति ज्ञानमात्रेण शास्त्रसमाप्तिपक्ष एव संभवति, नतूपास्यतया शास्त्रसमाप्तिपक्षे, तत्पक्षेऽपि यद्यपि फलत्वेनोपास्यत्वेन च पृथग्निर्देशे उभयत्वमपि न विरुद्धम्; तथाप्यत्र नोपास्यतया फलतया च ब्रह्म निर्दिश्यते, किन्तु तत्स्वरूपमात्रं बोध्यत इति कण्ठचामीकरन्यायेनाज्ञाननिवृत्त्यैव ब्रह्मप्राप्यतापक्ष उपपद्यत इति वक्तव्यम् इदं च न द्वैतमतरीतो संभवति। तैरुपास्यतयैव ब्रह्मणो मोक्षसाधनत्वस्य स्वीकारात्। एतेन—कार्यपरमेव पर्यवसितम्, तदेव च प्रमाणम्,

(क्रमशः)

# संस्कृत-नाटकानि

[ निबन्धकः—वि. कृष्णस्वाम्यय्यङ्गार्यः ]

( पूर्वानुवृत्तिः )

प्रकृतमनुसरामः। मिश्रं नामेतिवृत्तं प्रख्यात एवेतिवृत्ते कविना रसानुगुण्येन किञ्चिद्विपर्यासे प्रख्याप्यते। उत्पाद्यन्तु सर्वथा कविकपोलकल्पितमेव। आधुनिकानामन्तिममेव प्रियतममानन्ददायि च दृश्यते।

नाटकीयं संप्रदायमनुसृत्य प्रयाण-स्नान-भोजन-शयनादीनां प्रदर्शनार्हता अर्थोपक्षेपकाः नास्तीति कथमेषां सूचनम्? एतेषामसूचने तूत्तरत्र कथाभागस्य स्पष्टतया प्रतिपत्तेरसाध्यत्वात्। राज्यविप्लवस्य समरसमारम्भस्य प्रतिनायकवधस्य चेत्यादीनां प्रदर्शयितुमशक्यानां वृत्तान्तानामसूचने नाटकाभिनयस्य नीरसत्वापत्तेरिति शङ्का विमर्शकानामुदियाय। अत्रोपायानन्वेषयन्तः शास्त्रकाराः सूचनाक्रमं पञ्चविधमन्वशासुः। 'विष्कम्भचूलिकाङ्कास्यप्रवेशाङ्कावतारण'रूपाश्चैते पञ्चार्थोपक्षेपकाभिधानाः सूचकसंनिवेशाः प्रसिद्धाः। मध्यपात्रप्रयोजितो वृत्ताया वर्तिष्यमाणायाश्च कथायाः सूचकस्संक्षिप्तसम्भाषणरूपो विष्कम्भः। नेपथ्यान्तर्वर्तिभिरेव पात्रैरर्थसूचने चूलिका। अङ्कान्ते रंगमंचमधितिष्ठद्भिः पात्रैर्घटनाचातुर्येणोत्तराङ्कार्थस्य सूचनमङ्कास्यम्। विष्कम्भतुल्ययोगक्षेमो नीचपात्रप्रयोजितो वृत्तवर्तिष्यमाणकथासूचकः प्रवेशकः। आद्येऽङ्केऽपि विष्कम्भस्य प्रयोगो लाक्षणिकैरनुमतः, यथा मालविकाग्निमित्रे प्रथमाङ्क एव बकुलावलिकायाः कौमुदिकायाश्च संवादः। प्रवेशकस्तु न कश्चाप्याद्यमङ्कमलङ्करोतीति तु स्पष्टमेव। यतो हि प्रतिषिषिधुः शास्त्रकाराः—'प्रवेशकस्तु नाद्येऽङ्के' इति। उत्तराङ्कपात्राणामसूचनेऽपि पूर्वाङ्कार्थसम्बद्धाया एव कथाया मध्ये वृत्तान्तान्तरविरहादनुवर्तनमङ्कावतारणम्। अस्मिंश्चोत्तराङ्के नूतनानि

पात्रान्तराणि नैव प्रविशन्ति। तत्र विष्कम्भो द्वेधा। मध्यम-नीचपात्राभ्यां प्रयोजितो मिश्रविष्कम्भः, उभाभ्यामपि मध्यमाभ्यामेव पात्राभ्यां प्रयोजितस्तु शुद्धविष्कम्भः। एभिरुपक्षिप्तोऽर्थस्सूक्ष्मदर्शिभि-र्विज्ञातः कथामनुवर्तयति। अर्थोपक्षेपकाणामुपयोगो हि कथाया अविच्छेद-सम्पादनायैव।

तत्र कानिचिद्वचनानि श्राव्याणि रमयन्ते; कानिचिदश्राव्याणि च। स्वगतादिकम् 'प्रकाश'मिति निर्दिष्टानि वचनानि सर्वेषां श्रवणमर्हन्ति। स्वगतन्तु पात्रान्तराणामनाकर्णनीयम्। जनान्तिकं नाम पात्रान्तरेण साकं सम्भाषणम्, मत्सम्बोधितपात्रादन्यन्न श्रोतुमर्हति। अपवारितं पृष्ठतो वदनं परिवृत्य गुप्तरीत्या संभाषणम्। आकाशभाषितं नाम पुरतोऽस्थितं पात्रमुद्दिश्य 'किमाह भवान्' इत्यादिरीत्या स्वयमेव सम्भाषणनिर्वाहः। एतानि च नाटकेष्वावश्यकानि, सम्भाषणपद्धतेर्नाटकेष्वेवोपयोगात्।

कथाविस्ताराय पञ्चार्थप्रकृतय उपयुज्यन्ते। बीजं बिन्दुः पताका प्रकरी अर्थप्रकृतय· कार्यञ्चेतीमा अर्थप्रकृतयो व्यपदिश्यन्ते। बीजञ्च कथामूलभूतः कश्चन स्तोकोद्दिष्टो वृत्तान्तः, यः प्रासंगिकानां वृत्तान्तान्तराणामुपसम्बन्धा-द्विस्तृतरूपः कार्यहेतुर्भवति। कार्यं हि नाम फलावाप्तिसाधनमन्तिम· प्रयत्नः। तत्र च फलावाप्तीच्छाया एव कारणत्वात्सैव बीजपदेनोच्यते। तस्याश्चेच्छायाः कस्मिन्सन्निवेशे कथं कथमुत्पत्तिरभवदिति कथांशस्य निरूपणमेव नाटकस्यादिमे भागे प्रधानतमम्। यथा मालविकाग्निमित्रे नायकस्य मालविकायामभिलाषो बीजभूतः कविना सचमत्कारं विष्कम्भे सूचितः, संघटितश्च तदनुकूलश्चित्रशालायां देव्या सह राज्ञो नायकस्य नूतनचित्रप्रेक्षणादिः संनिवेशः। मध्ये प्रसङ्गादागतैर्व्यापारान्तरैर्नायकस्य प्रधानव्यापाराविस्मरणाय संयोज्यमानो विच्छिन्नां प्रधानकथामनुवर्तयिता बिन्दुः। यथा मालविकाग्निमित्रे हरदत्तगणदासयोः परस्परविज्ञानसंघर्षे 'प्राश्निकपदमध्यासीनायै पण्डितकौशिक्यै मालविका स्वीयमभिनयपाटवं दर्शयतु, न तु राज्ञः सान्निध्ये' इति राज्ञो मालविकादर्शनं परिजिहीर्षौ

धारिणीदेव्यां वदन्त्यां, सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषायेति प्राश्निक्याः प्रतिवादाद् देवी क्रोधमाहारयामास, तस्याः क्रोधशान्तिमन्तरा कथा नानुवर्तितुमलम्, तत्र विदूषकस्य "ननु कारणादेव । आत्मनः पक्षो रक्षितव्य इती" त्यनेनोपालम्भपरिहारेण जातरपर्यावुद्धेर्देव्याः क्रोधनिवृत्तिर्भवतीति तत्र विदूषकोक्तिरविच्छेदकारणं बिन्दुः । प्रकरी-पताके च प्रागेव निरूपिते । कार्यं फलावाप्तिकारणं नाटकान्तनिबद्धो नायकगत-स्तत्सहकार्यमात्यादिगतो वा प्रयत्नः । आरम्भयत्नप्राप्त्याशानियताप्ति-

अवस्थाः फलागमात्मिकानामवस्थानां स्वरूपमपि लाक्षणिकैर्यथावन्निरूपितम् । भूयसे फललाभायौत्सुक्यमेवारम्भावस्था । तादृश्यामेवावस्थायां कार्यहेतोर्बीजस्याप्युन्मेषेण कथारम्भात् । उद्दिष्टरीत्या निष्प्रत्यूहमिष्टावाप्तौ स्वाभिलषितसिद्धये नायकेनास्थीयमानस्त्वरान्वितो व्यापारो यत्नः । त्वरा चात्र यत्नविलम्बादिष्टलाभावकाशरयैव व्युच्छेदो मा संपादीत्यर्थम् । एतस्यामवस्थायां हि नायकस्येष्टलाभे महीयस्याकाङ्क्षा (Ankiety) त्वरा निसर्गतः प्रयोजयति । प्रयत्नानन्तरञ्च कृतिसाध्यताज्ञानस्य निर्णयात्मकस्योपायापायानां सम्यग्विमर्शाज्जातस्य समवधानादिष्टप्राप्तौ विश्वासः प्राप्त्याशा । आरब्धोद्योगस्यापि पुंसो विघ्नबाहुल्यादिज्ञानेऽभीष्टार्थावाप्तौ कृतिसाध्यत्वज्ञानं व्युदस्यत इत्यतस्तद्विषयिण्युत्तरकालिकी प्रवृत्तिर्बाध्येत, अतस्तत्र सहकारिविरोधिसामग्रीणा याथातथ्येनावधारणात् प्राप्तिसम्भवविनिर्णयोऽप्यपेक्ष्यते । निर्णीते च कार्यसम्भवे तत्र प्रवृत्तिरधिकारप्राप्ता न विरुध्यत इत्याकूतम् । अपायाभावज्ञानात्फलप्राप्तेर्दुष्प्रतिबन्धत्वज्ञानं नियताप्तिः । प्राप्त्याशायां कृतिसाध्यतानिर्णयमूलकस्य प्राप्तिसम्भवनिर्णयस्य सत्त्वेऽपि नियताप्तावपायात्यन्ताभावबुद्धिकृतः प्राप्तिनिर्णय एवेति विशेषः । प्राप्त्याशायां सम्भवपदेन सम्भावनाकोटिमाटीकमानस्य प्रबलप्रमाणान्तरसहकारान्निर्णयपदवीं प्रविष्टस्य प्राप्तिसम्भवज्ञानस्य सत्त्वात् । इह तु प्राप्तिरेव निर्णयविषय इत्यनयोर्भेदादित्यादि केनचित्पण्डितंमन्येनाभ्यधायि । वस्तुतो हि प्राप्त्याशावस्थायां प्राप्ति-

सम्भावनामात्रम्, न विनिर्णयः। निर्णतेरनतिरिक्तत्वापत्तेः सम्भावना-रामानस्थानापन्नो निर्णय इत्यस्य स्वव्याघातदोषाक्रान्तत्वात्। न हि सम्भावनाया निर्णयरूपत्वं निर्णयस्य वा संभावनारूपत्वं क्वचित्प्रामाणिकै प्रतीयते। प्राप्तिसम्भवनिर्णयः प्राप्तिनिर्णयात्कस्मिन्नंशे भिद्यत इत्यप्येष कुतर्कवाचस्पतिः प्रष्टव्यः। एतच्च संस्कृतभाषानभिज्ञानमूलक माटोपविष्टम्भितमिति नास्माकमत्र चोद्यावकाशः। फलागमश्च प्रधानीभूतेष्टलाभरूपफलनिर्वृत्तिः। समग्रफलसम्पत्तिरिति यावत्। एतासामवस्थानामर्थप्रकृतिभिस्साकमभिसम्बन्धात्पञ्च सन्धयो निर्वर्तन्ते। मुखं प्रतिमुखं गर्भोऽवमर्शो निर्वहणञ्चेत्येते पञ्च सन्धयः। विस्तरस्त्वन्यत्र द्रष्टव्यः।

मुखगर्भसन्ध्योः प्रत्येकं त्रयोदश, प्रतिमुखावमर्शसन्ध्योः प्रत्येकं संध्यङ्गानि चतुर्दश, उपसंहारसंधौ (एष एव निर्वहणसन्धिरन्तिमः) चतुर्दशेत्याहत्य षट्षष्टिरंगानि विद्यन्ते। सर्वाण्यप्येतान्यंगानि प्रयोक्तव्यान्येवेति न नियमः। अपि तु यथोचितमुपयोगान्नाटकस्य शोभासम्पदभिवर्धनीया। विद्यानाथेन समग्राङ्गमविकलसन्धिनाटकमुदाहृतम्। परन्तु तत्र नाटकीयानां नियमानां सावधानमनुपालनेऽपि न वाचकानामादरः सत्कारो वा। तत्र कारणञ्च वाचकहृदयस्पर्शिनो रसस्यानिष्पत्तिरेव। नियमानुरोधमात्रेण रसोत्पत्तेरशक्यप्रतिपत्तिकत्वात्। उक्तञ्च लाक्षणिकैः

( क्रमशः )

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road.
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

नीरस्य यः स्नेहगुणो गरीयान्
        दृष्टः स नेत्रस्य तनोति तृप्तिम् ॥४९॥
नवप्रवालेषु घनारुणश्रीः
        पत्रेषु च श्यामलतापरेषु ।
पीता रुचि॰ पक्वफलेषु हेतोः
        क्षितेरनेकं गमयन्ति रूपम् ॥५०॥
रूपाण्युपादाननिदानकानां
        रूपानुवर्तीनि भवन्ति कार्ये ।
कपालनीलो घटनीलहेतु-
        र्नानाङ्गरूपाण्यपि चित्रवीजम् ॥५१॥
अलं प्रकाशेन हि जम्बुकानां
        ये व्याघ्रभीता विवरे स्वपन्ति ।
तद्ग्रामघोषत्वमपि प्रलीनं
        पूर्वं विधात्रा विहितव्यवस्थम् ॥५२॥
पश्यामतः प्रान्तमदीनश्रृङ्गं
        नीलाह्वयं भूमिधरं विशालम् ।
पयोधिवेलागतपादशैलं
        किरातलीलानिलयं सुरम्यम् ॥५३॥
योऽयं समीपादपि मेघतुल्यो
        नभस्तलस्पर्शिविशालश्रृङ्गः ।
स्वामुन्नतिं विन्ध्यसमानमानां
        किं पश्यतां चेतसि नाभिधत्ते ॥५४॥
रत्नैर्विचित्रैरुपरुद्धगात्रः
        शैलो महानेष विभाति चित्रः ।
तेभ्यः प्रसृप्तैः किरणैरनेकै-
        र्भित्तिं विना चित्रमपादि शून्ये ॥५५

प्रसूनमालाभरणो महीध्रो
मयूरपिच्छेन सुशोभितेन ।
नीलाचलप्रोन्नतराजशृङ्गे
किरीटवन्नेत्रसुखं विधत्ते ॥५६॥

प्रातः प्रभृत्यातपदोषभीतिं
हर्तुं द्रुमा नीलमहीधरस्य ।
लताप्रतानैरपि नीलपत्रैः
कुर्वन्ति गात्रावरणं प्रयत्नात् ॥५७॥

क्वचित् सुरम्यः फलभारनम्रः
कम्रो नवस्निग्धपलाशपुञ्जैः ।
महीधरे चारुफलोपहारैः
कृतज्ञतां स्वां समभिव्यनक्ति ॥५८॥

व्यक्तः क्वचिद् वृक्षगणान्तराले
क्वचिद् विलीनो निविडद्रुमाद्यैः ।
क्वचित् सुखः क्वापि च दुःखहेतु-
र्विधातुरिच्छेव विभाति शैलः ॥५९॥

आदाय पुष्पाभरणानि गात्रे
सुवासितः सौरभसारभारैः ।
विहङ्गसङ्गीतकलप्रचारै-
र्दिगङ्गनामाह्वयतीव शैलः ॥६०॥

प्रातस्तरौ वृन्तविसृष्टपुष्पै-
र्दूर्वाप्रतानैः शिशिराभिषिक्तैः ।
विहङ्गमास्वादितशालिसारैः
सूर्याय मुष्णत्ययमर्घ्यभारम् ॥६१॥

क्वापि स्रवत्प्रस्रवणैस्तरूणां
मूलान्यसौ सिञ्चति पुष्टिहेतोः ।

पित्रोः शिलानिष्ठुरयोर्मनोऽपि
        सन्तानके स्नेहरसप्रसिक्तम् ॥६२॥
महीभृतः प्रस्रवणं विशालं
        निरन्तरं वेगमयं प्रयाति ।
कठोरपाषाणतलं विभिद्य
        कुतः किलैषा सलिलप्रसूतिः ॥६३॥
जीमूतमाला गिरिसानुलग्ना
        सम्प्रेरिता लोलसमीरणेन ।
सजीवतामस्य गिरेर्वदन्तो
        द्रुमानधः सिञ्चति वारिवर्षैः ॥६४॥
अस्मिन् वसन्तः परितः किराता
        धनुःशरक्षिप्रकराः सुवीराः ।
पञ्चास्य-शार्दूल-कुरङ्ग-घातैः
        पारुष्यकं स्वं समुदीरयन्ति ॥६५॥
किरातबालाः परितो भ्रमन्तो
        नीडात् समाहृत्य विहङ्गशावान् ।
कोलाहलं मोदमयं दधानाः
        कुर्वन्ति शैलं मुखरं दिनेषु ॥६६॥
समीपसञ्चारिविहङ्गयूथे
        स्थिरप्रचारे च कुरङ्गसङ्घे ।
शरं क्षिपन्तो निपुणं स एते
        चरन्ति शिक्षां मृगयानुवृत्तेः ॥६७॥
किरातयोषाः खगपिच्छभूषा
        वृक्षत्वचावृत्य कलेवरार्धम् ।
दारुच्चयं नीरसमाहरन्त्यः
        स्वचेतसो नीरसतां वदन्ति ॥६८॥

विहङ्गमाना समुपद्रुतानाम्
अस्मिन्न किरातैरपि हा पशूनाम् ।
अनेकरूपाः सविषादशब्दा
बाष्पं तरूणामपि वाहयन्ति ॥६९॥

जनैरदृष्टे शिखरे स्थितायां
महासरस्यामिह लब्धजन्मा
सरोजिनी हन्त वृथास्मितैव
विशीर्णपर्णा लयमेति काले ॥७०॥

तस्मिन्नतिक्रान्तसमीरचारे
विहङ्गमानामपि न प्रचारः ।
जीवैरपीतानि मधूनि शोषं
फलानि चाधो विलयं व्रजन्ति ॥७१॥

तीरोपकण्ठे सलिले तरुभ्यः
शीर्णानि पर्णानि मुदा प्लवन्ते ।
यस्मादियं प्रस्रवणप्रसूता
तरङ्गिणी प्रास्रवनी सखीवत् ॥७२॥

नूनं न तस्यां विहरन्ति हंसाः
स्थिरानिलाया न पतन्ति भृङ्गाः ।
निःस्पन्दना सा विनिवृत्तशब्दा
स्थिरासना राजति योगिनीव ॥७३॥

शैलो दधात्यक्षयनीरपूरं
निरन्तरप्रस्रवणोऽपि यस्मात् ।
न दीनतामेति जगन्निदानं
यथा प्रधानं निखिलानि सृष्ट्वा ॥७४॥

क्वचिद् गजानां गिरिसन्निभानां
पादप्रचारेण दृढाहितैः ।

सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः






संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| April, 1943 | १८६४-शकीये चैत्रे<br>२५श-वर्षस्य १२श-संख्या | Vol. XXV<br>No. 12 |

## उपनिषदामद्वैतपरता

( पूर्वानुवृत्तिः )

तथापीष्टतत्साधनयोरेव कार्यपदार्थत्वात् फलत्वेन तत्साधनत्वेन च ब्रह्मणोऽपि कार्यतया स्वप्रधाने ब्रह्मणि वेदान्तानां तात्पर्यादत्र स्वरूपमात्रकथनमात्रेण वाक्यपरिसमाप्तिरिति जयतीर्थटीकाऽपि—व्याख्याता। अत्र—अनेजत्—निर्भयम्, न तु निष्क्रियम् एकम् प्रधानम् न तु द्वितीयरहितम् मनसो जवीयः मनसोऽपि वेगवत्तरम्, न तु मनसोऽप्राप्यम्, नैनद्देवा आप्नुवन्—सम्यग्ज्ञातुमशक्यत्वात् सुरैरप्यगम्यम्, न तु सर्वथागोचरत्वात्, पूर्वं स्वर्गं सर्वगं पूर्वमेव स्वभावतः, अर्षत्—व्यजानादिति द्वैताभिमतविवरणम्, अद्वैताभिमतं तु निष्क्रियम्—अवाङ्मनसगोचरमद्वितीयमित्येवमादिरूपम्। अत्र धावतोऽन्यानत्येतीति क्रियानिर्देशस्तु कल्पित इत्यद्वैतमतम्

द्वैतमतविरोधान्न तथा व्याख्यानं युक्तम्। उत्तरत्र "याथातथ्यतोऽर्थान् व्यदधादि"ति प्रपञ्चसत्यत्वबोधनादपि न प्रपञ्चमिथ्यात्ववादो युक्त इति। अध्यारोपापवादन्यायेन सृष्टिवाक्यानां निर्गुणवाक्यैनैक-वाक्यतायां पूर्वोक्तरीत्याऽविरोध इति त्वद्वैतमतम्। "तस्मिन्नापो मात-रिश्वा दधाती"ति वाक्यशेषस्तु—भीषाऽस्माद्वातः पवत इति वाक्येनैक-वाक्यमेकार्थबोधकत्वात्, तस्मिन्नित्यस्य सलिलमग्न्यन्तत्वादित्यद्वैतमतम्, द्वैतमतं तु वायुस्तत्र कर्माण्यर्पितवानिति। तत्र प्रथममते तेनापि ब्रह्मत्व-मेव प्रतिपाद्यत इति नासङ्गतिः, अनेजदिति वाक्येनापि निर्भयत्वविवक्षा-नावश्यकता च। द्वितीयमते तु—वायुना स्वकर्मार्पणबोधनमन्येषां दृष्ट्या प्रतिपाद्यस्वरूपनिर्णयेऽनुपयुक्तम्। श्रीभागवताष्टमस्कन्धे तु—"ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते" इति सक्रियत्वमक्रियत्वमुभयं "सत्यः स्वयं ज्योतिरि"ति ब्रह्ममात्रसत्यत्वमन्याप्रकाश्यत्वम्, "यं न पश्यति पश्यन्तं चक्षुर्यस्य न रिष्यति" इति मनसोऽप्यगोचरत्वं "विश्वकाय" इति जन्यं विश्वमेवास्य काय इति बोधनेन वस्तुगत्या तस्याकायत्वादिकं च प्रति-पाद्यते, इति तेनाप्येकवाक्यताऽद्वैतमत एव॥

एतेन—"अनेजत्सन्निर्भयत्वादेकं प्राधान्यतस्तथा। सम्यग्ज्ञातुमशक्यत्वा-दगम्यं तत्सुरैरपि। स्वयं तु सर्वानगमत् पूर्वमेव स्वभावतः। अचिन्त्यशक्ति-तश्चैव सर्वगत्वाच्च तत्परम्" इत्यादि ब्रह्माण्डपुराणवचनान्यपि—व्याख्या-तानि, प्रक्षिप्तत्वात्, मुद्रितब्रह्माण्डपुराणानुपलम्भाच्च। वस्तुतस्तु—अनेजन्निर्भयत्वादित्यादि नाद्वैतमतेऽपि विरुद्धम्। प्राधान्यं तु श्रुतितात्-पर्यविषयत्वेनानन्यशेषत्वमद्वैतमतेऽपि मन्यत एवेति न कोऽपि विरोधः। "तस्मिन् कर्माण्यधान् मरुदि"त्यपि ब्रह्म एव कर्मवायोरपीत्येवाभिप्रैतीति सर्वस्य ब्रह्मविद्यावता सिद्धान्तमेवोपोद्बलयति॥

तदेजति तन्नैजतीत्युत्तरमन्त्रे हि ब्रह्मण एव तत्पदेन परामृष्टस्यै-जितृत्वमनेजितृत्वं च प्रतिपाद्यमानं सक्रियत्वाक्रियत्वे उभे अपि कल्पिताकल्पितस्वरूपेण स्वीकर्तव्ये' इति दर्शयति। अत्राप्येजतीत्यस्य

बिभेतीत्यर्थवर्णनं हि तदेजतीत्यत्र तच्छब्दस्य पञ्चम्यन्तार्थपरत्वापत्त्या तन्नैजतीत्यत्र प्रथमान्तपरत्वापत्त्या च न समुचितम्। सर्वस्य ब्रह्मणो भये प्रतिपादिते ब्रह्मणोऽपि भयस्यान्यतोऽप्रसक्तत्वात् तन्नैजतीत्यस्य द्वैत-मते वैयर्थ्यमपि। अद्वैतमते तु न कोऽपि दोषः॥

"तद्दूरे तद्वन्तिके" इत्यस्यैव मन्त्रस्यार्थतोऽनुवादः श्रीभागवताष्टमस्कन्धादौ —"न यस्याद्यन्तौ मध्यं च स्वः परो नान्तरं बहिरि"त्यंशेनानूद्यते। तेन च—तद्दूरे तद्वन्तिके इति परस्परस्य विरुद्धाश्रानमुभयराहित्यविवक्षायामेव स्वरसम्। तच्चाद्वैतवाद एव संभवति। द्वैतमते तु—तद्दूरे तद्वन्तिके इत्यादौ परमेश्वरस्य सर्वभूताश्रयतया सर्वभूतगतत्वमुक्तमिति मन्यते।

"यस्तु सर्वाणि भूतानि" इत्यादिमन्त्रास्तु ज्ञानफलप्रतिपादका इति संप्रतिपन्नम्। तत्र मन्त्रद्वयेनापि—परमात्मनो व्यापकत्वं सर्वभूताना-मात्मस्थत्वमात्मनियम्यत्वमेकत्वं च विजानतः फलमुच्यते। न तु अत्र सर्वभूतानामात्मव्यतिरेकेणाभावः, सर्वभूतेष्वात्मनोऽधिष्ठानविधयाऽनुगमो वेति द्वैतिनो मन्यन्ते, एते हि—आत्मनीति सप्तम्यनुपपत्तिरप्यद्वैतमत इति मन्यन्ते। अत्र—"आत्मैवाभूदि"त्येवकारवैयर्थ्यम्, एकेनैव रूपेण "यस्तु सर्वाणि भूतानी"ति "यस्मिन् सर्वाणि भूतानी"ति च व्यापकत्वादेरे-वानुसन्धानवैयर्थ्यम्, सर्वभूतस्थमित्यादावेकवचनेनैव सिद्धत्वादेकत्वमनु-पश्यतः इति तदेकत्वानुसन्धानवैयर्थ्यम्, विजानतः अनुपश्यत इति पदद्वय-वैयर्थ्यम्, "यस्मिन सर्वाणि भूतानि" इत्यत्र तत्रेत्याद्यध्याहारादिदोषाश्च बहवो वर्तन्ते। शुक्तिकायां रजतमितिवत् अधिष्ठानत्वाभिप्रायेण सप्तमीश्रुतिस्त्वद्वैत-मत एवोपपद्यते। एतेन—सर्वभूतेष्विति सप्तम्यपि—व्याख्याता, परस्पराध्या-सानुवादपरत्वात्। वस्तुतस्तु—सर्वभूतेष्विति आत्मनीति च सप्तमीद्वयं द्वैतमत एवानुपपन्नम्; नहि सर्वभूतवर्तित्वमात्रेण व्यापकत्वम्, अभूतेष्व-वृत्तावपि सर्वभूतस्थत्वसम्भवात्। सर्वभूतस्थत्ववर्णनेनैव ब्रह्मणः सर्वा-धेयत्वेऽवगते तस्यैव सर्वभूताधारकत्वकल्पनं तु व्याहतमेव अतोऽध्यारोपाप-वादप्रक्रियामेकामेवादाय परस्पराधिष्ठानैकत्वव्यवस्थोपपादयितुं शक्येत,

नान्यथेति मतद्वयमिदमद्वैतपक्ष एव वस्तुगत्या स्वरसमिति तत्र तत्रा-ध्याहारादिना विवरणेन स्वहृदयेनानुमन्यन्ते द्वैतिन इति प्रतिभाति ।

स पर्यगादित्यत्र शुक्रमित्यादि नपुंसकप्रयोगमात्रमद्वैतमते सत्यमन्यथा नीयते। सपदेन तु प्रस्तुतः परमात्मैव विवक्ष्यते, न तु द्वैतमत इव ब्रह्म-वित्। तस्य प्राधान्येनाप्रस्तुतत्वात्। "तत्र को मोहः कः शोकः" इति हि ज्ञानमात्रेण शोकादिनिवृत्तिप्रतिपादनात् न शोकनिवृत्तिमतिरिच्य ब्रह्मप्राप्तिर्नाम फलान्तरं विवक्ष्यत इति प्रतीयत इति व्यर्थं पुनरपि ब्रह्मप्राप्तेः फलत्वात्राप्यनुसन्धानम्। श्रुतिद्वयस्याप्येकवाक्यताविवक्षणे तु "विजानतः" इति षष्ठी "स" इति प्रथमा चानन्विता स्यात्। स इति पूर्ववाक्ये ब्रह्म-विदः परामर्शः, कविर्मनीषीत्यादिना च ब्रह्मण. परामर्श इति वाक्यभेदोऽपि द्वैतमते, अद्वैतमते त्वेकवाक्यता। ज्ञानफलनिरूपणप्रसङ्गे ब्रह्मणो यथार्थप्रपञ्चस्रष्टृत्वबोधनं त्वप्राप्तकालं द्वैतमते, अद्वैतमते तु ब्रह्मण्येव कल्पितत्वेन व्यावहारिकसत्यत्वबोधनद्वारा—ज्ञानमात्रेण ज्ञानानिवृत्त्या सर्वप्रपञ्चनिवृत्तिप्रतिपादनेन तत्साफल्यमिति "स पर्यगादि"त्यादिमन्त्रार्थो ऽप्यद्वैतमत एव स्वरसः। अकायमिति सशरीरस्यैव ब्रह्मणोऽशरीरत्व-वर्णनं तु विरुद्धमेव। शोकनिमित्तशरीरशून्यत्वविवक्षायां तु—अव्राविर-मित्यादि वितथम्। अद्वैतमते तु—शरीरत्रयनिषेधाभिप्रायम्,—अकाय-मित्यादि। अव्यक्तमपि सूक्ष्मशरीरपदेनैव व्यवहारार्हमिति हि—आनु-मानिकाधिकरणे सूत्रभाष्ययोर्व्यक्तम्। सृष्टिदशायां तु कारणशरीरं परे वर्तत इत्यभिप्रायेण सूक्ष्मशरीरमात्रस्याकायमित्यत्र कायशब्देन परा-मर्शः। सर्वथा तु—अकायमित्यतोऽनुक्तं किमपि द्वैतमतेऽव्राविरमित्य-नेन नोच्यते। "शाश्वतीभ्यः समाभ्यो याथातथ्यत" इत्युक्त्या हि यावत्संवत्स-रावस्थानमेव यथार्थत्वम्, न तु ततोऽनन्तरमपीति गम्यते। संवत्सरा-णामवस्थानं तु कियदवधीति नैतावताऽपि सिद्धम् तथा च शाश्वतीभ्यः

( क्रमशः )

# संस्कृत-नाटकानि

[ निबन्धकः—वि. कृष्णस्वाम्यय्यङ्गार्यः ]

( पूर्वानुवृत्तिः )

—'एषामंगानां प्रयोगे षट् प्रयोजनानि। विवक्षितार्थप्रतिपादनं, गोप्यार्थगोपनं, प्रकाश्यार्थप्रकाशनम्, अभिनयरागसमृद्धिः, चमत्कारित्वम्, इतिवृत्तविस्तरश्च" इति। तत्र विवक्षितार्थप्रतिपादनादभिन्नरूपे गोप्यार्थगोपनप्रकाश्यार्थप्रकाशने। गोप्यस्य प्रतिपिपादयिषितत्वेऽपि सूचनासाधनैर्विष्कम्भादिभिरेव तन्निरूपणानिर्वाहात्तत्र पृथग्विवक्षासम्भवादेव गोपनापत्तेः। प्रकाश्यस्य तु विवक्षितत्वमबाधितत्वमिति तस्य प्रकाशनात्मके प्रतिपादने संभवति तस्य कार्यान्तरत्वभङ्गादिति। एवञ्चमत्कारित्वस्याभिनयरागसमृद्धिरूपत्वेनाभेदात्पृथक् कीर्तनमनावश्यकमेव। चमत्कारकारिता हि रसपरिपोषरूपामभिनयरागसमृद्धिमुपजीवन्ती कार्यकारणयोस्तादात्म्यव्यवहारात्तदभेदमश्नुते। इतिवृत्तविस्तरस्त्वत्र मुख्यं प्रयोजनम्। प्राधान्यतस्तत्रैव संधीनामङ्गानाञ्चोपकारकतादर्शनात्। अर्थप्रकृतीनामवस्थानाञ्च कथाविस्तारोपयोगितायास्सार्वजनीनत्वात्। तदाहुः—'इतिवृत्तविस्तरेण सार्थकानि संध्यंगानि" इति। तानि च प्रतापरुद्रीयदशरूपकादितोऽवगन्तव्यानि।

नाटकेषूपादेयो नायको धैर्यशौर्यसौन्दर्याणामाकरस्त्यागी धार्मिकः
पात्राणि प्रियवादी विद्यावान्बुद्धिमान्प्रतिभानवान्सद्वंशजश्च। एतन्नायकस्य सामान्यलक्षणम्। स चायं धीरोदात्तो धीरललितो धीरोद्धतो धीरशान्तश्चेति चतुर्विधः श्रूयते। धीरोदात्तादीनां विशेषगुणास्तु संग्रहतः प्रदर्श्यन्ते। धीरोदात्ते सुखदुःखयोरविशेषेणाविचालितमनस्कता, महासत्त्वम्, गाम्भीर्यम्, क्षमा, आत्मश्लाघावर्जनं, स्थैर्यम्, विनयः, आत्मविश्वासश्च। उदाहरणम् दुष्यन्तः। धीरललिते मृदुस्वभावः, संगीत-

साहित्ययोरासक्तिः, राजकार्येषु वैमुख्यादमात्यायत्तसिद्धिता च। उदाहरणम्—वत्सराजः। धीरोद्धते दर्पमात्सर्ये, मायाप्रलोभने, क्रोधोन्मादः, चाञ्चल्यम्, अहङ्कारः, आत्मश्लाघा, ईर्ष्याद्वेषावसूया च। परशुरामो रावणश्चात्र निदर्शनम्। प्रायशस्सर्वे प्रतिनायका धीरोद्धता एव भवन्ति। धीरशान्तस्तूक्तैर्विशेषगुणैर्विहीनस्साधारणो नायकः। एष च वैश्यो ब्राह्मण एव वा भवति। उदाहरणम्—माधवः, चारुदत्तश्च। शृंगारनायकेषु लाक्षणिकाश्चतुरः प्रभेदानामनन्ति। एकस्यामेव नायिकायां सविशेषमनुरक्तोऽनुकूलः। अनेकासु नायिकासु निष्पक्षपातं तुल्यवृत्तिर्दक्षिणः। विपक्षकामिनीसंभोगचिह्नैरुद्घाटितापराधोऽपि प्रकृत-नायिकाप्रेमभङ्गाभावाशङ्कया भयमप्रविशन्नायको धृष्टः। अनभिव्यक्तापराधो नायिकामात्रविदितापचारश्च शठः। एतेष्वप्युत्तममध्यमाधमभेदात् त्रिविधः। एवञ्च अष्टाचत्वारिंशन्नायकभेदाः पर्यवसिताः।

नायिका नाम नाटके प्रधानं स्त्रीपात्रम्। एषा च स्वीयाऽन्या साधारणी चेति त्रिविधा। तत्रापि यौवनरयानुभवस्य च किञ्चिद्विभेदेन मुग्धा, मध्या, प्रगल्भा चेति पुनस्त्रिविधा। तत्र शृङ्गारनायिका अष्टविधा। स्वाधीनपतिका वासकसज्जिका विरहोत्कण्ठिता विप्रलब्धा खण्डिता कल-हान्तरिता प्रोषितभर्तृकाऽभिसारिका चेति। एतासां स्वरूपं लक्षण-ग्रन्थेषु सम्यक् प्रतिपादितम्। साहित्यदर्पणे तु ३८४ नायिकाभेदा निरूपिताः। मध्याप्रगल्भे द्वे अपि प्रत्येकं धीरा, अधीरा, धीराधीरेति त्रिविधे। एवं षड्विधा अपि नायिका नायकप्रणयं प्रति ज्येष्ठत्वकनिष्ठ-त्वाभ्यां द्वेधा विभज्यन्ते इति द्वादश भेदाः। एका मुग्धा चेति स्वीयायां त्रयोदश भेदाः। परकीया तु द्वेधा परोढा कन्यका चेति। वेश्या च साधारणनायिकेति षोडश सङ्कलिता भेदाः। एतासाञ्चाष्टावस्थास्स्वाधीन-पतिकत्वादयः प्रत्येकं पर्याप्नुवन्तीत्यष्टाविंशत्युत्तरं शतं भेदाः। तेषा-मप्युत्तमाधममध्यमभावेन त्रिधा विभागाच्चतुरशीत्युत्तरं शतत्रयं प्रभेदाना-मस्तीति तस्याशयः।

एवं पीठमर्दकविदूषकादीनि नायकयोस्समागमसंविधाने नानोपाय-प्रयोगसाध्ये निपुणानि शृङ्गारविद्यापारदर्शीनि पात्रान्तराण्यपि यथा-सम्भवमुपनिबध्य नाटकं रमणीयरूपं प्रसाधयेदिति लाक्षणिकानां नियमाव-धारणम् ।

संस्कृतनाटकेषु पद्यं गद्यमित्युभयमपि मिश्रितमेव प्रयुञ्जते कवयः । छन्दः तत्रापि त्रिंशत् तान्येवाधुना यावदुपलब्धेषु नाटकेषू-पयुक्तानि नेतः परमधिकानि । श्लोको वसन्ततिलका मालिनी शिखरिणी शार्दूलविक्रीडितं स्रग्धरा पुष्पिताग्रा वंशस्थमार्या प्रहर्षिणी चेति दशैव वृत्तानि बाहुल्येनोपयुक्तानि । एतेषु श्लोकेन्द्रवज्रादीनि वृत्तानि कथाकथने लाघवादनुकूलानि दृश्यन्ते । स्रग्धरादीनि गुरूणि मन्दगमीनि वर्णनाया-मुपयोक्तुमर्हाणि । श्लोकादिषु द्रुतगतिरेव पठनेऽपि स्वाभाविकी शोभत इति तानि वर्णनायामनुपयुक्तानि । आर्यावसन्ततिलकादीनि च गानानु-गुणानि नाटकानां शोभां पुष्णन्ति ।

अश्वघोष एवास्माभिर्विदितानां नाटककाराणामादिमः । तस्यैव काले नाटकमिदं परिपूर्णरूपं नियतसन्ध्यङ्गं बहुलनियमपरिष्कृतञ्च प्रयोगदशा-मवतीर्णमुपलभ्यते । तस्मादश्वघोषप्रणीतानामपि नाटकानां समग्ररूपतया-ऽनुपलम्भान्नाटकानां मूलस्वरूपस्य छन्दसा च कीदृशस्सम्बन्ध आसी-दिति विनिगमकानि प्रमाणानि नैव सन्तीति वक्तव्यमापतितम् । नाटकस्य प्राथमिकं स्वरूपं कीदृगासीत्, तत्र च पद्यानामपि समावेशो बभूव न वेत्यादयश्चर्चास्पदं विषयाः कस्याप्युपपादिनः प्रमाणस्यान्वेषितस्याप्य-लाभात्संशयगोचरा एवावतिष्ठन्ते । परन्तु नाटकानां गीतनृत्तप्रचुरतया पद्यानां पठनादपि विशेषतो गाने विनियोगार्हाणां बाहुल्येन नाटकेषु प्रथममपि प्रयोगस्सम्भाव्यते । गानयोग्यानामेव छन्दसामवतारेण नाटकी-यानां पात्राणां संगीतस्याप्यवकाशलाभात् । संगीतमिश्रणमन्तरेण नाटकस्य दृश्यकाव्यस्यापि सामाजिकानामनाह्लादकतया गानार्हाणां वृत्तानामुपयोग-स्यात्यन्तमावश्यकतामनुसंहितवन्तः प्राचीना नाटकमूलपुरुषा अपि

गानयोग्यानि पद्यानि प्रशंसनीयानि पुरश्चक्रुरिति वितर्कस्य न्याय्यत्वात्। नाट्यादेव नाटकस्योत्पत्तिरिति शाब्दिकी व्युत्पत्तिरप्यमुमर्थमुपोद्वलयति। नाट्यञ्च नृत्यस्य परिवर्तितं परिवर्धितं परिष्कृतञ्च रूपान्तरमेवेति प्रागभ्यधायि। नृत्येऽपि गीतसमावेशो न नियतः, अपि तु तस्य प्रकृतिभूते नृत्ते तालल्योपेतं गीतमन्तरभूदिति नृत्ये संगीतसमावेशः संभाव्यते। प्रकृतिगतस्य विशेषस्य विकृतौ किञ्चित्परिवृत्ताकारेण संबधस्यैव नियमात्। नृत्ते विद्यमानस्य गीतस्य नृत्ये तस्माच्च नाट्येऽपि संक्रमसम्भवात्। प्रथमतो गानार्हाणामेव वृत्तानामुपयोग आसीदेवेत्यत्रैषा युक्तिः। कालक्रमेण खण्डकाव्यानां महाकाव्यानाञ्चाभिवृद्धावुपक्रान्तायां वर्णनोपयोगीनि कथनोपयोगीनि च महान्ति पद्यानि नाटकेषु पदं न्यधुः। महाकाव्यानां प्रभावो हि नाटकानामुपरि परिणामकारिणा रूपेण प्रसज्यमानो भाषाशैल्याः पद्यानाञ्चावस्थान्तरमापादमायास। सामर्थ्य(पाण्डित्य)प्रदर्शनाय चमत्काराधानाय च क्रमेणापूर्वाणि कानिचिद्वृत्तान्यवतेरुः। अत एव भासशूद्रककालिदासानां नाटकेषु बाहुल्येन मनांस्याकर्षन्ति श्लोकार्यावसन्ततिलकादीनि लघुवृत्तानि हर्षभवभूत्योः काले क्षीणप्रचाराणि दृश्यन्ते। भासो हि शार्दूलविक्रीडितमेकं महद्वेतदिति विचार्य त्रयाणां चतुर्णां वा पात्राणां विभज्य प्रददाति। कालिदासस्तु स्रग्धरादिकमपि महत्पद्यमेकस्यैव पात्रस्य मुखे निक्षिपन्कालक्रमेण संपन्नमवस्थान्तरं निदर्शयतीति स्पष्टमेव।

( क्रमशः )

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

सम्पीडिताङ्गो गिरिरेष भूमे-
        स्तलं विविक्षन्निव रक्षति स्वम् ॥७५॥
पञ्चाननः कुञ्जरकुम्भमभ्यं
        विभिद्य मुक्ताः किरति स्वमार्गे ।
किरातबालाः प्रतिलभ्य ताभि-
        प्रकुर्वते गोलकगर्तखेलाः ॥७६॥
उपत्यकायामिह पङ्कपूर्णे
        ह्रदे समागत्य वराहयूथम् ।
पङ्कं शरीरे मृत्तिकां दधानं
        सुरातपक्लेशमिवापमृङ्क्ते ॥७७॥
कश्चित् पिबत्येष सकर्दमाम्भः
        कश्चिच्च शम्बूककुलं भनक्ति ।
मुस्ताक्षतिं कोऽपि करोति तीरे
        कश्चित्तथा धावति भूरिदूरे ॥७८॥
ऊर्ध्वं विदूरे शिखरे प्रसूता
        दूर्वातृणानीव विभान्ति वृक्षाः ।
क्रमादधः पुष्पफलादिदृष्ट्या
        लक्ष्यस्तरूणामभितो विशेषः ॥७९॥
यावत्सुदूरं चलतीह दृष्टि-
        सन्दृश्यते तावदसौ वनाली ।
इतो जलं दीर्घमुपत्यकाया
        वनं विना किञ्चन तत्र दृश्यम् ॥८०॥
इदं नदी-सागर-योगरम्यं
        पदं वयं सम्प्रति लब्धवन्तः ।
नदी रसैः सागरमेति वेगात्
        प्रयाति कान्तं हि रसेन कान्ता ॥८१॥

पुरो वहत्येष विशालसिन्धुः
कल्पान्तबन्धुः कमलाप्रियस्य ।
उत्थापयामास हि कूर्मरूपः
पृष्ठेन मग्ना वसुधाममुष्मात् ॥८२॥

अस्मात् समाकृष्य नदीमुखेन
तोयं जगत् सर्वमुपैति पुष्टिम् ।
अत्रैव निर्गच्छति तत्र काले
वृद्धिः क्षयो वा न तथाप्यमुष्मिन् ॥८३॥

न मानसीमा नभसो यथास्ते
यथा च कालस्य महामहिम्नः ।
तथैव नास्यावधिरस्ति तस्मात्
सर्वाश्रयः श्रीपतिरत्र शेते ॥८४॥

सुरासुरैः पूर्वमिमं मथित्वा
लक्ष्मी-सुधैरावत-पारिजाताः ।
उच्चैःश्रवाः सौम्य-तुरङ्गराजः
सुरा च लब्धाः सहकालकूटाः ॥८५॥

सन्त्यत्र रत्नानि पृथग्विधानि
धात्रा कृते कोषगृहे विशाले ।
यद्रक्षणार्थं सलिलान्तरेऽस्मिन्
ग्राहा न्ययुज्यन्त दुरन्तकृत्याः ॥८६॥

पारेसमुद्रं समवस्थितोऽसौ
शैलो नभःस्पर्शिविशालशृङ्गः ।
एनं समारुह्य परं हि पारं
द्रष्टुं विधात्रा विहितः किमेषः ॥८७॥

धातुर्महाराज्यवसुन्धराया
भीष्मः पयोधिः परिखेव भाति ।

सुदुर्गमस्तावदयञ्च शैलः
सीमान्तदुर्गश्रियमेव धत्ते ॥८८॥
प्रायेण मध्याम्बरगो विवस्वान्
असौ ललाटन्तपतिग्मरश्मिः ।
अतः परं दूरसमुद्रतीरं
व्यतीत्य गम्यश्च निजप्रदेशः ॥८९॥
तद् वत्स विज्ञापय नाविकानाम्
इहैव नौकाविरतिं सुशीघ्रम्
भृत्याश्च तीरे पटहादिवाद्यै-
र्हिंस्रेषु भीतिं परितो दिशन्तु ॥९०॥
ततः परं शङ्खपतिः सुवृत्तः
प्रियापितुः प्राप्य तथा निदेशम् ।
यावत् समादिक्षदकारि तावद्
भृत्यैर्यथादेशमिह प्रबन्धः ॥९१॥

भेरीवाद्यैः पटहनिनदैर्मर्दलाद्यैर्मृदङ्गै-
र्व्याप्तं शून्यं सलिलमनिलः पर्वतः काननञ्च ।
नौकाः सर्वास्तटमुपगता भृत्यवर्गोऽवतीर्ण-
स्तीरे तस्मिन्नथ पटगृहा रज्जुबद्धा विकीर्णाः ॥९२॥
श्रुत्वा शब्दं तुमुलमभितः शैलकान्तारसंस्था
व्यस्ता भीत्या प्रतिदिशमगुः श्वापदा दूरदूरम् ।
नद्यास्तीरान्तरतरुगताः पक्षिणोऽपि प्रकामं
तस्मिन् काले चकितचकिताः शून्यमार्गे निषेदुः ॥९३॥
दूरं यावत् प्रसरतितरां स ध्वनिर्विश्वसूत-
स्तावल्लुप्ता स्थितिरनुदिशं सम्प्रसादा तिरश्चाम् ।
भीतिं त्यक्त्वा तदयमभितो भृत्यवर्गः स्वकृत्ये
तीरे तस्मिन्नुचिततरसा व्यापृतः प्रातकाले ॥९४॥

सूरः क्षिप्रां कृतिमनुपमां तामिव द्रष्टुकामः
स्पष्टं मध्याम्बरमुपगतो रश्मिनेत्रैः सहस्रैः ।
वैश्यौ सन्ध्याचरणनियमस्नानपूजादिहेतो-
स्तीरं प्राप्तौ परिजनशतैः सम्भ्रमेणाभियातौ ।।६५।।

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये वणिक्प्रस्थानं नामैकोनविंशः सर्गः ।।१९।।

—o—

## विंशसर्गः

मध्याम्बरं कमलिनीदयिते प्रपन्ने
सर्वत्र नष्टमनभोष्टतमः प्रकाशैः ।
नीराणि हीरकरुचिं समुपेत्य सैत्याद्
वालोद्धृतानि नयनोपहतिं दिशन्ति ।।१।।
ऊर्ध्वं तरोरविषमं कमलाधिनाथे
दीप्तं करं किरति तामसनाशदक्षे ।
छाया भयादिव जगाम तदीयमूलं
भीतः समर्थमनुगच्छति बन्धुमादौ ।।२।।
वृक्षाग्रभागमपहाय विहङ्गसङ्घाः
पत्रान्तरालमनुसन्दधतेऽतिभीताः ।
तेजस्विनां सपदि दुःसहतेजसार्ता-
स्तत्तेजसो बहिरवस्थितिमाश्रयन्ते ।।३।।
तीव्रातपेन परितः परितप्तदेह-
स्तृष्णातुरः क्वचन पल्वलमल्पतोयं
संश्रित्य वायसगणः स्वशरीरभागं
चञ्च्वा निषिञ्चति पयःपृषतैः सशब्दम् ।।४।।

## Some Law Books For Sale

## at the Sanskrit Sahitya Parishat, Shambazar,

## 17, R G Kar Road, Calcutta

1-16. Mews' Digest of English Case Law up to 1910 (Vols 1 to 16) 17-30 *Indian Law Reports*, Cal (1) 1876-78, Cal (2) 1879 80 [ 2 copies ], Cal (3) 1881, Bengal (1 & 2) 1867-69, Bombay (1-2) 1876-78, Allahabad (1) (Agra F B) 1866 71, Allahabad (1 2) 1876-80 [2 Copies], Madras (1) 1876-82, Madras (2) 1882-84, Madras (2) 1882-84, Madras (4) 1889-90 Allahabad (5) Agra F C R, 1866 69 31 48 Citator [ 18 Vols. ] 49-51 New Civil Court Manual, Vols 1 to 3. 52. Stamp Act 53. Transfer of Property Act (Act IV of 1882) 54 60 Lawyer, Vol 9 61 L C Series, Pt II 62 L C Series, Pt II. 63 L. C S, Indian Trans Act 64. L. C S, Indian Railway Act 65. L C S, Indian Insolvency Act 66 L Companion, Pt X 67 L C. S, Code of Civil Procedure, Vol I, 1908 68 L C S, Code of Civil Procedure, Vol II. 69 Law of Evidence by Gondeve 70 Catechism of I P C 71 Civil Procedure Code—M C Sarcar (4th Ed ) 72 Code of Civil Procedure—J O' Kinely, Vol I, 73 Code of Civil Procedure—J O' Kinely, Vol II 74 Civil Procedure Code—M C Sarcar, 1906 75 Criminal Court Manual, Vol I 76 Criminal Court Manual, Vol II. 77 Code of Criminal Law—Sir H T Princep 78 Burma Code 79 Burma Code 80. Civil Procedure Code (1909), Vol II—M C Sarkar 81 Indian Penal Code with Comm by Hamilton 82 Commentaries on the Code of Civil Procedure, 1908 83 The Law of Acquisition, Acts of 1874 1885 84 The New Code of Civil Procedure, 1908 85, The All-India Civil Court Manual (U P of Agra & Oudh). 86 The All India Civil Court Manual (Bombay) 87 The Indian Contract Act 88 The Indian Practice, 1908 89 The Code of Civil Procedure 90 The Indian Court Fees Act, 1870 91 The Indian Contract Act, 1872 92 Transfer of Property Act, 1882 93 Summary of the Code of Criminal Procedure, 1898 94 The Legal Practitioners Act, 1879 95 Rivary's Limitation 96 Law of Benami Transactions, 1914 97 The Law Relating to Guardians and Wards in British India 98 The Indian Law of Arbitration 99 The Law of Insolvency (India) and Bankruptcy 100 Tit bits of Indian Law, 101 The Burma Code 102 The Biennial Digest of the Bombay Law Reports, 1899-1914 103 The Madras Law Journal Digest, Vols I XX, 1881-90 104 The Burma Code. 105 The Stamp Law of British India, Act of 1899 106 The Indian Stamp Act, No II of 1899 107 The Indian Stamp Act, No II of 1899 108 Repealed Stamp Regulations and the English Stamp Act of 1891 109 The Indian Criminal Digest, 1862 110 The Indian Criminal Digest, Vol II 111. A Digest of Civil Cases, Vol I (I L R, 1876 to 1894 & C L R 1876-1883) 112 A Digest of Cases (B L R., Vols I-XV) 113. A Digest of Civil Cases (I L R, 1876 1894 & C L R, 1878-1883, Vol II) 114 A Digest of Cases (Civil & Criminal) I L R for the year 1895 115. The Comprehensive Criminal Digest. 116 The General Digest of the Criminal Rulings (Several High Courts in India), 1862-1897. 117 The Burma Police Manual Vol I 118 Digest of Cases, 119 Index of Cases (Judicially noticed), 1811-1904 120 The Digest of Indian Cases, 1811-1901 (P K Nambeyar) 121 The Consolidated Digest, 1901-1905 122-125 The Annual Digest of Indian Cases, 1906, 1907, 1908, 1910 126. A Digest of Rulings of the Court, 1862-1903 127 A Digest of Cases (Civil and Criminal), 1898 128 The Annual Law Digest, 1906. 129 The Annual Law Digest, 1901 130 Digest (I. L R.), 1896 131 Digest (I L. R ), 1901, 132-137 Annual Law Digest, 1897, 1899, 1900, 1902, 1904, 1903 138. Declaratory Decrees 139 Digest of Rulings of the Court of the Judicial Commissioners. C. P., 1862-1903, Vol I. 140. The Annual Digest, 1911. 141. I. L R., 1876-1885

142 Revenue (Civil & Criminal) Reports 143-146 Commentaries on the Law of England, Books 1st, 2nd, 3rd, 4th. 147. Principles of Indian Criminal Law and Introduction to the Study of Penal Code 148 The Indian Criminal Law with notes and Forms of charges of Indian Penal Code 149 Law of Confessions and Approvers for Police 150 The Indian Arms Act 151 Practical Companion to the Indian Merchandise Marts, Act IV of 1889. 152 An Exhaustive Treatise on the Penal Gambling Laws of British India. 153. A Hand Book of Criminal Law 154 Breaches of Contract 155 The Indian Kings Act, 1901. 156 Security to keep the Peace and for Good Behaviour 157 Ruling under the Stamp Law 158 Crimes as Invention and Detention 159. An Epitome of the Law ejecting charter-parties and Bills of Law. 160 Indian Practitioners *Guide 161 The Student Guide to Bar. 162 London LL B Guide 163 London LL B. Examinations paper 164 The Case noted Indian Contract Act 165 Our Law Courts 166 A Memorandum of Practice in Civil cases 167. An Introduction to the Indian Evidence Act 168 Law Relating to Riots and Unlawful Assemblies 169 Notes on the Law of Confession 170 Hand Book of Civil Law 171 A Compendium of Law for the use of the Station House officer 172 Legal Practitioners Act 173. Military Law 174. An Epitome of Mahomedan Law—Rana and Mulji, 1903. 175 Pocket Civil Rules and Practice, 1905 176 An Abstract of Maine's Ancient Law 177 The Law of Sanction to Prosecute 178. Analysis of Contract Law 179 Provincial and all Courts Act 180 In the other Court. 181 Indian Law Examination Manual 182 Bombay University LL. B 183 The Indian Penal Code, 1837 184 Principles de Legislation 185 An Examination of the Principles and Policy of the Bengal Tenancy Bill 186 Outlines of Constitutional Law—India 187 Pleadings in Indian Court 188 The Indian Evidence Act No 106, 1872 189 The Land Acquisition Acts I of 1894, XVIII of 1893 190 The Law of Limitation (Act, of 1908) 191 The Indian Evidence Act, 1872 192 The Negotiable Instruments Act, 1881 193 The Law Relating to Negotiable Instruments Act in British India. 194. The Law of Specific Relief in India 195 The Evidence Act, No I of 1872 196 The Court Fees Act, No VII of 1870 and the Suits Valuation Act and the Civil Courts Acts 197 The Indian Stamp Act, No II of 1899 198. A New Guide to the Bar. 199. Advocacy and Examination of Witness 200 The Trial of Cases 201 A Guide to our Muffasil Courts. 202 Practice and Procedure in Civil Court and Examination of Witness 203 The Magistrate's Court Manual. 204 A New Guide to the Bar 205 Supplements to the Law of Easements. 206 The Law of Easements 207. De Colyar's Law of Guarantees and of Principles and Surety. 208 Elementary Studies in Mercantile Law (Applicable to British India) 209 The Law of Legal Necessities and Obligations. 210. On the Interpretation of Indian Statutes based on Indian Case Law 211 Consecutive Tables (Criminal Cases) 212 A Digest of Law Cases (Central Province Reports 1862-1906). 213. The Law Vade Mecum (Parts I-V) 214 The Provincial Insolvency Act, III of 1907, 2 Vols. 215. The Indian Insolvent Act. 216 The Law of Lunacy in British India. 217 The Indian Law of Insolvency (C M XXI). 218 The Indian Insolvent Act 219 The Provincial Insolvency Act, III of 1907 220 The Provincial Insolvency Act, III 1907 221. The Digest of Indian Law Reports, 1876 to 1896 222 Mears' Digest of English Case Law, 1911-12 223. The Criminal Court Manual 224. The Law and Practice of insolvency in India 225. Acts of the Governor General's Council, 1911 226 Conflict of Laws between the Converts and Non-converts in India 222-246 Laws of England (Vols. I-XXVII & Sup ) by Halsbury